सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्।
अब्रुवन् विब्रुवन्वापि नरो भवति किल्बिषी ॥७३
पादोऽधर्मस्य कर्तारं पादः साक्षिणमृच्छति।
पादः सभासदः सर्वान्पादो राजनमृच्छति ॥७४
राजा भवत्यनेनास्तु मुच्यन्ते च सभासदः।
एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥७५
अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान्।
परोक्षमर्थवैकल्याद्भाषते यः सभागतः ॥७६
तस्मात्सभ्यः सभां प्राप्य रागद्वेषविवर्जितः।
बचस्तथाविधं ब्रूयाद्यथा न नरकं पतेत् ॥७७
यथा शल्यं भिषग्विद्वानुद्धरेद्यन्त्रयुक्तिभिः।
प्राड्विवाकस्तथा शल्यमुद्धरेद् व्यवहारतः ॥७८
यत्र सभ्यो जनः सर्वः साध्वेतदिति मन्यते।
स निश्शल्यो विवादः स्यात्सशल्यः स्यादतोऽन्यथा ॥७९
न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम्।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥८०

॥ इति व्यवहारदर्शनविधिः ॥

.........

## अथ ऋणादानं प्रथमं विवादपदम्।

ऋणं देयमदेयं च येन यत्र यथा च यत्।
दानग्रहणधर्माश्च ऋणादानमिति स्मृतम् ॥१
पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः।
विभक्ता ह्यविभक्ता वा यस्तामुद्वहते धुरम् ॥२
पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम्।
मात्रा वा यत्कुटुम्बार्थे दद्युस्तद्रिक्थिनोऽखिलम् ॥३
क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम्।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥४
इच्छन्ति पितरः पुत्रान्स्वार्थहेतोर्यतस्ततः।
उत्तमर्णाधमर्णेभ्यो मामयं मोक्षयिष्यति ॥५
अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः।
ऋणात्पिता समुद्धार्यो यथा न नरकं पतेत् ॥६
तपस्वी चाग्निहोत्री च म्रियते चेदृणी यदि।
तपश्चैवाग्निहोत्रं च तत्सर्वं धनिनां धनम् ॥७
न पुत्रर्णं पिता दद्यात् दद्यात्पुत्रस्तु पैतृकम्।
कामक्रोधसुराद्यूतप्रातिभाव्यकृताद्विना ॥८
पितुरेव नियोगाद्यत्कुटुम्बभरणाय वा।
कृतं वा यदृणं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता ॥९

शिष्यान्तेवासिदासस्त्रीवैयावृत्त्यकरैश्च यत् ।
कुटुम्बहेतोरुच्छिन्नं वोढव्यं तत्कुटुम्बिना ॥१०

नार्वाक् संवत्सराद्विंशात्पितरि प्रोषिते सुतः ।
ऋणं दद्यात्पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा ॥११

दाप्यः परर्णमेकोऽपि जीवत्स्वधिकृतैः कृतम् ।
प्रेतेषु तु न तत्पुत्रः परर्णं दातुमर्हति ॥१२

न स्त्री पतिकृतं दद्यादृणं पुत्रकृतं तथा ।
अभ्युपेतादृते यद्वा सह पत्या कृतं तथा ॥१३

दद्यात्त्वपुत्रा विधवा नियुक्ता या मुमूर्षुणा ।
यो वा तद्रिक्थमादद्याद्यतो रिक्थमृणं ततः ॥१४

न च भार्याकृतमृणं कथञ्चित्पत्युराभवेत् ।
आपत्कृतादृते पुंसां कुटुम्बार्थो हि विस्तरः ॥१५

अन्यत्र रजकव्याधगोपशौण्डिकयोषितः ।
तेषां तत्प्रत्यया वृत्तिः कुटुम्बं च तदाश्रयम् ॥१६

पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री यान्यमाश्रयेत् ।
तस्या रिक्थं हरेत्सर्वं निःस्वायाः पुत्र एव तु ॥१७

या च सप्रधनैव स्त्री सापत्या चान्यमाश्रयेत् ।
सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ॥१८

अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋणं बोढुः स भजते तदेतस्य धनं स्मृतम् ॥१९

धनस्त्रीहारिपुत्राणामृणभाग् यो धनं हरेत् ।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः ॥२०

उत्तमा स्वैरिणीनां या पुनर्भ्वामुत्तमा तथा ।
ऋणं तयोः पतिकृतं दद्याद्यस्ते उपाश्नुते ।।२१
स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि ।
विशेषतो गृहक्षेत्रदानाधमनविक्रयाः ।।२२
एतान्येव प्रमाणानि भर्ता यद्यनुमन्यते ।
पुत्रः पत्युरभावे वा राजा वा पतिपुत्रयोः ।।२३
भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद् वा स्थावराद्दते ।।२४
तथा दासकृतं कार्यमकृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ।।२५
पुत्रेण च कृतं कार्यं यत्स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुर्दासः पुत्रश्च तौ समौ ।।२६
अप्राप्तव्यवहारस्तु स्वतन्त्रोऽपि नचर्णभाक् ।
स्वातन्त्र्यं तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ।।२७
त्रयः स्वतन्त्रा लोकेऽस्मिन् राजाचार्यस्तथैव च ।
प्रति प्रति च सर्वेषां वर्णानां स्वगृहे गृही ।।२८
अस्वतन्त्राः प्रजाः सर्वाः स्वतन्त्रः पृथिवीपतिः ।
अस्वतन्त्रः स्मृतः शिष्य आचार्ये च स्वतन्त्रता ।।२९
अस्वतन्त्राः स्त्रियः पुत्रा दासाश्च सपरिग्रहाः ।
स्वतन्त्रस्तत्र तु गृही यस्य स्यात्तत्क्रमागतम् ।।३०
गर्भस्थसदृशो ज्ञेय आष्टमाद्वत्सराच्छिशुः ।
बाल आ षोडशाद्वर्षात्पौगण्डश्चेति शब्द्यते ।।३१

प्राप्तो व्यवहारज्ञः स्वतन्त्रः पितरावृते।
जीवतोर्ह्यस्वतन्त्रः स्याज्जरयापि समन्वितः ॥३२
तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात्।
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥३३
स्वतन्त्राः सर्व एवैते परतन्त्रेषु सर्वदा।
अनुशिष्टौ निसर्गे च विक्रये चेश्वरा मताः ॥३४
यद् बालः कुरुते कार्यमस्वतन्त्रस्तथैव च।
अकृतं तदिति प्राहुः शास्त्रे शास्त्रविदो जनाः ॥३५
स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः।
तदप्यकृतमेवाहुरस्वतन्त्रः स हेतुतः ॥३६
कामक्रोधाभियुक्तार्तभयव्यसनपीडिताः।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥३७
कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थस्तु यो भवेत्।
तत्कृतं स्यात्कृतं कार्यं नास्वतन्त्रकृतं कृतम् ॥३८
धनमूलाः क्रियाः सर्वा यत्नस्तत्साधने मतः।
वर्धनं रक्षणं भोग इति तस्य विधिः क्रमात् ॥३९
तत्पुनस्त्रिविधं ज्ञेयं शुक्लं शबलमेव च।
कृष्णं च तस्य विज्ञेयः प्रभेदः सप्तधा पुनः ॥४०
श्रुतशौर्यतपःकन्याशिष्ययाज्यान्वयागतम्।
धनं सप्तविधं शुक्लमुदयोऽप्यस्य तद्विधः ॥४१
कुसीदकृषिवाणिज्यशुल्कशिल्पानुवृत्तिभिः।
कृतोपकारादाप्तं च शबलं समुदाहृतम् ॥४२

पार्श्वकद्यूतदूतार्तप्रतिरूपकसाहसैः ।
व्याजेनोपार्जितं यच्च तत्कृष्णं समुदाहृतम् ॥४३
तेन क्रयो विक्रयश्च दानं ग्रहणमेव च ।
विविधाश्च प्रयुज्यन्ते क्रियाः सम्भोग एव च ॥४४
यथाविधेन द्रव्येण यत्किञ्चित्कुरुते नरः ।
तथाविधमवाप्नोति स फलं प्रेत्य चेह च ॥४५
तत्पुनर्द्वादशविधं प्रतिवर्णाश्रयं स्मृतम् ।
साधारणं स्यात्त्रिविधं शेषं नवविधं स्मृतम् ॥४६
क्रमागतं प्रीतिदायं प्राप्तं च सह भार्यया ।
अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम् ॥४७
वैशेषिकं धनं ज्ञेयं ब्राह्मणस्य त्रिलक्षणम् ।
प्रतिग्रहेण लब्धं च याज्यतः शिष्यतस्तथा ॥४८
त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम् ।
युद्धोपलब्धं कारश्च दण्डश्च व्यवहारतः ॥४९
वैशेषिकं धनं ज्ञेयं वैश्यस्यापि त्रिलक्षणम् ।
कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात् ॥५०
सर्वेषामेव वर्णानामेष धर्म्यो धनागमः ।
विपर्ययादधर्म्यः स्यान्न चेदापद् गरीयसी ॥५१
आपत्स्वनन्तरा वृत्तिर्ब्राह्मणस्य विधीयते ।
वैश्यवृत्तिस्ततश्चोक्ता न जघन्या कथञ्चन ॥५२
न कथञ्चन कुर्वीत ब्राह्मणः कर्म वार्षलम् ।
वृषलः कर्म न ब्राह्मं पतनीयौ हि तौ तयोः ॥५३

उत्कृष्टं चापकृष्टं च तयोः कर्म न विद्यते।
मध्यमे कर्मणी हित्वा सर्वसाधारणे हि ते ॥५४
आपदं ब्राह्मणस्तीर्त्वा क्षत्त्रवृत्त्या भृते जने।
उत्सृजेत् क्षत्त्रवृत्तिं तां कृत्वा पावनमात्मनः ॥५५
तस्यामेव तु यो वृत्तौ रमते ब्राह्मणो रसात्।
काण्डपृष्ठश्च्युतो मार्गात्सोऽपाङ्क्तेयः प्रकीर्तितः ॥५६
वैश्यवृत्तावविक्रेयं ब्राह्मणस्य पयो दधि।
घृतं मधु मधूच्छिष्टं लाक्षाक्षाररसासवाः ॥५७
मांसौदनतिलक्षौमसोमपुष्पफलोपलाः।
मनुष्यविषशस्त्राम्बुलवणापूपवीरुधः ॥५८
नीलकौशेयचर्मास्थिकुतपैकशफा मृदः।
उदश्वित्केशपिण्याकशाकाद्यौषधयस्तथा ॥५९
ब्राह्मणस्य तु विक्रेयं शुष्कदारु तृणानि च।
गन्धद्रव्यैरकालेयतूलमूलतुषादृते ॥६०
स्वयं विशीर्णं विदलं फलानां बदरेङ्गुदे।
रज्जुः कार्पासिकं सूत्रं तच्चेदविकृतं भवेत् ॥६१
अशक्तौ भेषजस्यार्थे यज्ञहेतोस्तथैव च।
यद्यवश्यं तु विक्रेयास्तिला धान्येन तत्समाः ॥६२
अविक्रेयाणि विक्रीणन् ब्राह्मणः प्रच्युतः पथः।
मार्गे पुनरवस्थाप्यो राज्ञा दण्डेन भूयसा ॥६३
प्रमाणानि प्रमाणस्थैः परिपाल्यानि यत्नतः।
सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः ॥६४

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं विदुः ।
धनस्वीकरणे येन धनी धनमुपाश्नुते ॥६५
लिखितं बलवन्नित्यं जीवन्तस्त्वेव साक्षिणः ।
कालातिहरणाद्भुक्तिरिति शास्त्रेषु निश्चयः ॥६६
त्रिविधस्यास्य दृष्टस्य प्रमाणस्य यथाक्रमम् ।
पूर्वं पूर्वं गुरु ज्ञेयं भुक्तिर्वैषां गरीयसी ॥६७
विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतः स्थावराणां यन्न भुक्तं न तत्स्थिरम् ॥६८
भुज्यमानान् परैरर्थान् यः स्वमौढ्यादुपेक्षते ।
समक्षं जीवतोऽप्यस्य तान् भुक्तिः कुरुते स्वकान् ॥६९
यत्किञ्चिद्दश वर्षाणि सन्निधौ प्रेक्षते धनी ।
भुज्यमानं परैस्तूष्णीं न स तल्लब्धुमर्हति ॥७०
उपेक्षां कुर्वतस्तस्य तूष्णीम्भूतस्य तिष्ठतः ।
कालेऽतिपन्ने पूर्वोक्तो व्यवहारो न विद्यते ॥७१
अजलश्चेदपोगण्डो विषये चास्य भुज्यते ।
भुक्तं तद्व्यवहातेण भोक्ता तद्धनमर्हति ॥७२
आधिः सीमा बालधनं निक्षेपोपनिधिस्त्रियः ।
राजस्वं श्रोत्रियस्वं च नोपभोगेन जीर्यति ॥७३
प्रत्यक्षपरिभोगाच्च स्वामिनो द्विदशाः समाः ।
आध्यदीन्यपि जीर्येयुः स्त्रीनरेन्द्रधनादृते ॥७४
स्त्री धनं च नरेन्द्राणां न कथञ्चन जीर्यति ।
अनागमं भुज्यमानं वत्सराणां शतैरपि ॥७५

निर्भोगो यत्र दृश्येत न दृश्येतागमः क्वचित्।
आगमः कारणं तत्र न भोगस्तत्र कारणम्॥७६
भुज्यतेऽनागमं यत्तु न तद्भोगोऽतिवर्तते।
प्रेते तु भोक्तरि धनं यति तद्वंश्यभोग्यताम्॥७७
आहर्तैवाभियुक्तः सन्नर्थतस्तद्धरेत् पदम्।
भुक्तिरेव विशुद्धिः स्यात् प्राप्तानां पितृतः क्रमात्॥७८
अन्वाहितहृतन्यस्तबलावष्टब्धयाचितम्।
अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमाद्विना॥७९
तथारूढविवादस्य प्रेतस्य व्यवहारिणः।
पुत्रेण सोऽर्थः संशोध्यो न तद्भोगोऽतिवर्तते॥८०
आगमेन विना पूर्वं भुक्तं पूर्वैस्त्रिभिस्तु यत्।
न तच्छक्यमपाकर्तुं क्रमात्त्रिपुरुषागतम्॥८१
सन्तोऽपि न प्रमाणं स्युर्मृते धनिनि साक्षिणः।
अन्यत्र श्रावितं यत्स्यात् स्वयमासन्नमृत्युना॥८२
नहि प्रत्यर्थिनि प्रेते प्रमाणं साक्षिणां वचः।
साक्षिमत्करणं तत्र प्रमाणं स्याद्विनिश्चये॥८३
श्रावितस्त्वातुरेणापि यस्त्वर्थो धर्मसंहितः।
मृतेऽपि तत्र साक्षी स्यात् षट्सु चान्वाहितादिषु॥८४
क्रियर्णादिषु सर्वेषु बलवत्युत्तरोत्तरा।
प्रतिग्रहाधिक्रीतेषु पूर्वा पूर्वा गरीयसी॥८५
स्थानलाभनिमित्तं हि दानग्रहणमिष्यते।
तत्कुसीदमिति ज्ञेयं तेन वृत्तिः कुसीदिनाम्॥८६

कायिका कालिका चैव कारिका च तथास्मृता ।
चक्रवृद्धिश्च शास्त्रेषु तस्य वृद्धिश्चतुर्विधा ॥८७
कायाविरोधिनी शश्वत् पणपादादि कायिका ।
प्रतिमासं स्रवन्ती या सा वृद्धिः कालिका स्मृता ॥८८
वृद्धिः सा कारिका दाम यर्णिकेन स्वयं कृता ।
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ॥८६
ऋणानां सार्वभौमोऽयं विधिर्वृद्धौ कृतः स्मृतः ।
देशाचारविधिस्त्वन्यो यत्रर्णमधितिष्ठति ॥ ॥६०
द्विगुणं त्रिगुणं चैव तथान्यस्मिंश्चतुर्गुणम् ।
तथाष्टगुणमन्यस्मिन् देशे देशेऽवतिष्ठते ॥६१
हिरण्यधान्यवस्त्राणां वृद्धिर्द्वित्रिचतुर्गुणा ।
घृतस्याष्टगुणा वृद्धिः स्त्रीपशूनां तु सन्ततिः ॥६२
न वृद्धिः प्रतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते ॥६३
एष वृद्धिविधिः प्रोक्तः प्रवृद्धस्येह धर्मतः ।
वृद्धिस्तु योक्ता धान्यानां वार्धुष्यं तदुदाहृतम् ॥६४
आपदं निस्तरेद्वैश्यः कामं वार्धुषकर्मणा ।
आपत्स्वपि हि कष्टासु ब्राह्मणस्य न वार्धुषम् ॥६५
ब्राह्मणस्य च यद्देयं सान्वयस्य न चास्ति सः ।
सपिण्डेभ्योऽस्य निवपेत् तदभावेऽस्य बन्धुषु ॥६६
यदा च नै सकुल्याः स्युर्नच सम्बन्धिबान्धवाः ।
तदा दद्यात्स्वजातिभ्यस्तेष्वसत्स्वप्सु निक्षिपेत् ॥६७

गृहीत्वोपगतं दद्याद् ऋणिकायोदयं धनी।
अददद् याच्यमानस्तु शेषहानिमवाप्नुयात् ॥९८

लेख्यं दद्यादृणे शुद्धे तदभावे प्रतिश्रवम्।
धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम् ॥९९

विस्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च।
लिखितं साक्षिणश्च द्वे प्रमाणे व्यक्तिकारणे ॥१००

उपस्थानाय दानाय प्रत्ययाय तथैव च।
त्रिविधः प्रतिभूर्दृष्टस्त्रिष्वेवार्थेषु सूरिभिः ॥१०१

ऋणिष्वप्रतिकुर्वत्सु प्रत्यये वा विवादिते।
प्रतिभूस्तदृणं दद्यादनुपस्थापयंस्तथा ॥१०२

बहवः स्युः प्रतिभुवो दद्युस्तेऽर्थं यथाकृतम्।
अर्थेऽविशेषिते त्वेषु धनिनश्छन्दतः क्रिया ॥ १०३

यमर्थं प्रतिभूर्दद्याद् धनिकेनोपपीडितः।
ऋणिकस्तं प्रतिभुवे द्विगुणं प्रतिपादयेत् ॥१०४

अधिक्रियत इत्याधिः स तु ज्ञेयो द्विलक्षणः।
कृतकालोपनेयश्च यावद्देयोद्यतस्तथा ॥१०५

स पुनर्द्विविधः प्रोक्तो गोप्यो भोग्यस्तथैव च।
प्रतिदानं तथैवास्य लाभहानिर्विपर्यये ॥१०६

प्रमादाद् धनिनस्तद्वदाधौ विकृतमागते।
विनष्टे मूलनाशः स्याद्दैवराजकृतादृते ॥१०७

रक्ष्यमाणोऽपि यत्राधिः कालेनेयादसारताम्।
आधिरन्योऽधिकर्तव्यो देयं वा धनिने धनम् ॥१०८

ऋणिकः सधनो यस्तु दौरात्म्यान्न प्रयच्छति।
राज्ञा दापयितव्यः स्याद् गृहीत्वांशं तु विंशकम् १०९
अथ शक्तिविहीनः स्यादृणी कालविपर्ययात्।
शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम् ॥११०
नश्येद् द्रव्यपरीमाणं कालेनेहर्णिकस्य चेत्।
जातिसंज्ञाधिवासानामागमो लेख्यत स्मृतः ॥१११
लेख्यं तु द्विविधं ज्ञेयं स्वहस्तान्यकृतं तथा।
असाक्षिकं साक्षिमच्च सिद्धिर्देशस्थितिस्तयोः ॥११२
देशाचाराविरुद्धं यद् व्यक्ताधिकृतलक्षणम्।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ११३
मत्ताभियुक्तस्त्रीबालबलात्कारकृतं च यत्।
तदप्रमाणं करणं भीतोपधिकृतं तथा ॥११४
मृताः स्युः साक्षिणो यत्र धनिकर्णिकलेखकाः।
तदप्यपार्थं लिखितमृते त्वाधेः स्थिराश्रयात् ॥११५
आधिर्यो द्विविधः प्रोक्तः स्थावरो जङ्गमस्तथा।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥११६
दर्शितं प्रतिकालं यच्छ्रावितं स्रावितं च यत्।
लेख्यं सिध्यति सर्वत्र मृतेष्वपि हि साक्षिषु ॥११७
अश्रुतार्थमदृष्टार्थं व्यवहारार्थमेव च।
न लेख्यं सिद्धिमाप्नोति जीवत्स्वपि हि साक्षिषु ॥११८
लेख्ये देशान्तरन्यस्ते दग्धे दुर्लिखिते हृते।
सतस्तत्कालकरणमसतोऽद्रष्टदर्शनम् ॥११९

यस्मिन्स्यात्संशयो लेख्ये भूताभूतकृते क्वचित्।
तत्स्वहस्तक्रियाचिह्नप्रातियुक्तिभिरुद्धरेत् ॥१२०

लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतं भवेत्।
विप्रत्यये परीक्ष्यं तत्सम्बन्धागमहेतुभिः ॥१२१

लिखितं लिखितेनैव साक्षिमत् साक्षिभिर्हरेत्।
साक्षिभ्यो लिखितं श्रेयो लिखितेन तु साक्षिणः ॥१२२

छिन्नभिन्नहृतोन्मृष्टनष्टदुर्लिखितेषु च।
लेख्यमन्यद्धि कर्तव्यमेष लेख्यविधिः स्मृतः ॥१२३

सन्दिग्धेषु तु कार्येषु द्वयोर्विवदमानयोः।
दृष्टश्रुतानुभूतत्वात् साक्षिभ्यो व्यक्तिदर्शनम् ॥१२४

समक्षदर्शनात् साक्षी विज्ञेयः श्रोत्रचक्षुषोः।
श्रोत्रस्य यत्परो ब्रूते चक्षुषः कायकर्म यत् ॥ १२५

एकादशविधः साक्षी स तु दृष्टो मनीषिभिः।
कृतः पञ्चविधस्तत्र षड्विधोऽकृत उच्यते ॥१२६

लेखितः स्मारितश्चैव यदृच्छाभिज्ञ एव च।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः ॥१२७

अकृतः षड्विधो नित्यः सूरिभिः परिकीर्तितः।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥१२८

कार्येष्वधिकृतो यः स्यादर्थिना प्रहितश्च यः।
कुलं कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥१२६

कुलीना ऋजवः शुद्धा जन्मतः कर्मतोऽर्थतः।
त्र्यवराः साक्षिणोऽनिन्द्याः शुचयः स्युः सुबुद्धयः ॥१३०

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चाप्यनिन्दिताः।
प्रतिवर्णं भवेयुस्ते सर्वे सर्वेषु वा पुनः॥१३१
श्रेणिषु श्रेणिपुरुषाः स्वेषु वर्गेषु वर्गिणः।
बहिर्वासिषु बाह्याश्च स्त्रियः स्त्रीषु च साक्षिणः॥१३२
श्रेण्यादिषु च सर्वेषु कश्चिच्चेद् द्वेष्यतामियात्।
तेभ्य एव न साक्षी स्याद् द्वेष्टारः सर्व एव ते॥१३३
असाक्ष्यपि हि शास्त्रेषु दृष्टः पञ्चविधो बुधैः।
वचनाद् दोषतो भेदात्स्वयमुक्तेर्मृतान्तरात्॥१३४
श्रोत्रियाद्या वचनतः स्तेनाद्या दोषदर्शनात्।
भेदाद्विप्रतिपत्तिः स्याद्विवादे यत्र साक्षिणः॥१३५
स्वयमुक्तेरनिर्दिष्टः स्वयमेवैत्य यो वदेत्।
मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताहते॥१३६
श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजिता नराः।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः॥१३७
स्तेनाः साहसिकाश्चण्डाः कितवा वधकाश्च ये।
असाक्षिणस्ते दुष्टत्वात् तेषु सत्यं न विद्यते॥१३८
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः॥१३९
स्वयमुक्तेरनुद्दिष्टः स्वयमेवैत्य यो वदेत्।
सूचीत्युक्तः स शास्त्रेषु न स साक्षित्वमर्हति॥१४०
योऽर्थः श्रावयितव्यः स्यात् तस्मिन्नसति चार्थिनि।
क्व तद् वदति साक्षित्वमित्यसाक्षी मृतान्तरः॥१४१

द्वयोर्विवदतोरर्थे द्वयोः सत्सु च साक्षिषु।
पूर्वपक्षो भवेद् यस्य भवेयुस्तस्य साक्षिणः ॥१४२

आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद् भवेत्।
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः ॥१४३

न परेण समुद्दिष्टमुपेयात् साक्षिणं रहः।
भेदयेत् तं नचान्येन हीयेतैवं समाचरन् ॥१४४

साक्ष्युद्दिष्टो यदि प्रेयाद् गच्छेद् वापि दिगन्तरम्।
तच्छ्रोतारः प्रमाणं स्युः प्रमाणं ह्युत्तरक्रिया ॥१४५

सुदीर्घेणापि कालेन लिखितः सिद्धिमाप्नुयात्।
आत्मनैव लिखेज्जानन्नजानानस्तु लेखयेत् ॥१४६

अष्टमाद् वत्सरात् सिद्धिः स्मारितस्येह साक्षिणः।
आपञ्चमात् यथा सिद्धिर्यच्छ्रोपगतस्य तु ॥१४७

आतृतीयात् तथा वर्षात् सिद्धिर्गूढस्य साक्षिणः।
आवत्सरात् तथा सिद्धिं वदन्त्युत्तरसाक्षिणः ॥१४८

अथवा कालनियमो न दृष्टः साक्षिणं प्रति।
स्मृत्यपेक्षं हि साक्षित्वमाहुः शास्त्रविदो जनाः ॥१४९

यस्य नोपहता पुंसः स्मृतिः श्रोत्रं च नित्यशः।
सुदीर्घेणापि कालेन स साक्षी साक्ष्यमर्हति ॥१५०

असाक्षिप्रत्ययास्त्वन्ये षड् विवादाः प्रकीर्तिताः।
लक्षणान्येव साक्षित्वं तेषामाहुर्मनीषिणः ॥१५१

उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिस्तु घातकः।
केशाकेशिगृहीतस्तु युगपत् पारदारिकः ॥१५२

कुद्दालपाणिर्विज्ञेयः सेतुभेत्ता समोपगः।
तथा कुठारपाणिश्च वनच्छेत्ता प्रकीर्तितः ॥१५३

अभ्यग्रचिह्नो विज्ञेयो दण्डपारुष्यकृन्नरः।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥१५४

कश्चित् कृत्वात्मनश्चिह्नं द्वेषात् परमभिद्रवेत्।
हुत्वर्थगतिसामर्थ्यैस्तत्र युक्तं परीक्षणम् ॥१५५

नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः।
न दृष्टदोषाः प्रष्टव्याः साक्षिणः प्रतिदूषिताः ॥१५६

दासनैकृतिकाश्रद्धवृद्धस्त्रीबालचाक्रिकाः।
मत्तोन्मत्तप्रमत्तार्तकितवग्रामयाजकाः ॥१५७

महापथिकसामुद्रवणिक्प्रव्रजितातुराः।
लुब्धैकश्रोत्रियाचारहीनक्लीबकुशीलवाः ॥१५८

नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः।
एकस्थालिसहायारिचरज्ञातिसनाभयः ॥१५९

प्राग्दृष्टदोषशैलूषविषजीव्याहितुण्डिकाः।
गरदाग्निदकीनाशशूद्रापुत्रोपपातकाः ॥१६०

क्लान्तसाहसिकाशान्तनिर्धूतान्तावसायिनः।
भिन्नवृत्त्यसमावृत्तभक्ततैलिकमूलिकाः ॥१६१

भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः।
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः ॥१६२

कुनखी श्यावदन् श्वित्री मित्रध्रुक्छठशौण्डिकाः।
ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः ॥१६३

वधकृच्चित्रकृन्मद्यः पतितः कूटकारकः।
कुहकः प्रत्ययस्तस्करो राजपूरुषः ॥१६४
मनुष्यविषशस्त्राम्बुलवणापूपवीरुधाम्।
विक्रेता ब्राह्मणश्चैव द्विजो वार्धुषिकश्च यः ॥१६५
च्युतः स्वधर्मात्कुलिकः स्तावको हीनसेविता।
पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः ॥१६६
असाक्षिणो ये निर्दिष्टा दासनैकृतिकादयः।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः ॥१६७
साहसेषु च सर्वेषु स्तेयसंग्रहणेषु च।
पारुष्ययोश्चाप्युभयोरसाक्षी नोपपद्यते ॥१६८
न तत्रापि च बालः स्यान्नैको न स्त्री न कूटकृत्।
न बान्धवो नचारातिर्ब्रूयुस्ते साक्ष्यमन्यथा ॥१६९
बालोऽज्ञानादसत्यात्स्त्री पापाभ्यासात्तु कूटकृत्।
विब्रूयाद् बान्धवः स्नेहाद् वैरनिर्यातनादरिः ॥१७०
अथवानुमतो यः स्याद् द्वयोर्विवदमानयोः।
स साक्ष्येकोऽपि साक्षित्वे प्रष्टव्यः स्यात्तु संसदि ॥१७१
यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते।
स्थानात् स्थानान्तरं गच्छेदेकैकं चोपधावति ॥१७२
कासत्यनिभृतोऽकस्मादभीक्ष्णं निःश्वसित्यपि।
भूमिं लिखति पादाभ्यां बाहू वासा धुनोति च ॥१७३
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा।
शोषमागच्छतश्चोष्ठावूर्ध्वं तिर्यक् च वीक्षते ॥१७४

त्वरमाण इवापृष्टो वह्वबद्धं च भाषते ।
कूटसाक्षी स विज्ञेयस्तं पापं विनयेद् भृशम् ॥१७५
श्रावयित्वा तथान्येभ्यः साक्षित्वं योऽपि निह्नुते ।
स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः ॥१७६
आहूय साक्षि(णं ? णः) पृच्छेन्नियम्य शपथैर्भृशम् ।
समस्तान् विदिताचारान् विज्ञातार्थान् पृथक् पृथक् ॥१७७
सत्येन शापयेद् विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥१७८
पुराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः ।
अनृतस्यापवादैश्च भृशमुत्त्रास्य साक्षिणः ॥१७९
नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ।
क्रुद्धः शत्रुगृहं गच्छेद् यः साक्ष्यमनृतं वदेत् ॥१८०
नगरे प्रतिरुद्धः सन् बहिर्द्वारो बुभुक्षितः ।
अमित्रान् भूयसः पश्येद् यः साक्ष्यमनृतं वदेत् ॥१८१
यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां चातिभारतप्ताङ्गो दुर्विवक्ता स्म तां वसेत् ॥१८२
साक्षी साक्ष्यसमुद्देशे गोकर्णशिथिलं चरन् ।
सहस्रं वारुणान् पाशानात्मनि प्रतिमुञ्चति ॥१८३
तस्य वर्षशते पूर्णे पाश एकः प्रमुच्यते ।
एवं स बन्धनात्तस्मान्मुच्यते नियताः समाः ॥१८४
यावतो बान्धवान् यस्मिन् हन्ति साक्ष्येऽनृतं वदन् ।
तावतः सङ्ख्यया तस्मिञ्छृणु सौम्यानुपूर्वशः ॥१८५

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥१८६
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।
सर्व भूम्यनृते हन्ति मा स्म भूम्यनृतं व(दी ? दः) ॥१८७
एकमेवाद्वितीयं तत्प्राहुः पवनमात्मनः।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥१८८
अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्रात् तु सत्यमेव विशिष्यते ॥१८९
परं कूपशताद् वापी परं वापीशतात् क्रतुः।
परं क्रतुशतात् पुत्रः सत्यं पुत्रशतात् परम् ॥१९०
भूर्धारयति सत्येन सत्येनोदयते रविः।
सत्येन वायुः पवते सत्येनापः स्रवन्ति च ॥१९१
सत्यमेव परं दानं सत्यमेव परं तपः।
सत्यमेव परो धर्मो लोकानामिति वै श्रुतिः ॥१९२
सत्यं देवाः समासेन मनुष्यास्त्वनृतं स्मृताः।
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥१९३
सत्यं ब्रूह्यनृतं त्यक्त्वा सत्येन स्वर्गमेष्यसि।
उक्त्वानृतं महाघोरं नरकं सम्प्रपत्स्यते ॥१९४
निरयेषु च ते शश्वज्जिह्वामुत्कृत्य दारुणाः।
असिभिः शातयिष्यन्ति बलिनो यमकिङ्कराः ॥१९५
शूले मत्स्यानिवाक्षिप्य क्रोशन्तमपरायणम्।
अवाक्शिरसमुत्क्षिप्य क्षेप्स्यन्त्यग्निह्रदेषु च ॥१९६

अनुभूय च दुःखास्ताश्चिरं नरकवेदनाः।
इहायास्यस्यभव्यासु गृध्रकाकादियोनिषु ॥१९७
ज्ञात्वैताननृते दोषान् ज्ञात्वा सत्ये च सद्गुणान्।
सत्यं वदोद्धरात्मानं मात्मानं पीपतश्चिरम् ॥१९८
न बान्धवा न सुहृदो न धनानि महान्त्यपि।
अलं धारयितुं शक्तास्तमस्युग्रे निमज्जतः ॥१९९
पितरस्त्ववलम्बन्ते त्वयि साक्षित्वमागते।
तारयिष्यति किन्न्वस्मानात्मानं पातयिष्यति ॥२००
सत्यमात्मा मनुष्यस्य सर्वं सत्ये प्रतिष्ठितम्।
सर्वथैवात्मनात्मानं श्रेयसा योजयिष्यसि ॥२०१
यां रात्रिमजनिष्ठास्त्वं यां च रात्रिं मरिष्यसि।
वृथा तदन्तरा ते स्यात् साक्ष्यं चेदन्यथा वदेः ॥२०२
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम्।
साक्षिधर्मे विशेषेण सत्यमेव वदेरतः ॥२०३
यः परार्थेऽपहरति स्वां वाचं पुरुषाधमः।
आत्मार्थे किन्न कुर्यात् स पापं नरकनिर्भयः ॥२०४
अर्था वै वाचि नियता वाङ्मूला वाचि मिश्रिताः।
यो वैतां स्तेययेद् वाचं स सर्वस्तेयकृन्नरः ॥२०५
साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो यतः।
तत्साम्ये शुचयो ग्राह्यास्तत्साम्ये स्मृतिमत्तराः ॥२०६
स्मृतिमत्साक्षिसाम्यं तु विवादे यत्र दृश्यते।
तीक्ष्णत्वात् साक्षिधर्मस्य साक्ष्यं व्यावर्तते ततः ॥२०७

निर्दिष्टेष्वर्थजातेषु साक्षी चेत् साक्ष्य आगते ।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥२०८

देशकालवयोद्रव्यप्रमाणाकृतिजातिषु ।
यत्र विप्रतिपत्तिः स्यात् साक्ष्यं तदपि चान्यथा ॥२०९

ऊनमभ्यधिकं वार्थं प्रब्रयुर्यत्र साक्षिणः ।
तदप्यनुक्तं विज्ञेयमेष साक्ष्यविधिः स्मृतः ॥२१०

प्रमादाद् धनिनो यत्र न स्याल्लेख्यं न साक्षिणः ।
अर्थं चापह्नुते वादी तत्रोक्तस्त्रिविधो विधिः ॥२११

चोदना प्रतिकालं च युक्तिलेशास्तथैव च ।
तृतीयः शपथः प्रोक्तस्तैर्ऋणं शोधयेत् क्रमात् ॥२१२

अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिश्चतुष्पञ्चकृत्वो वा परतोऽर्थं समाचरेत् ॥२१३

चोदनाप्रतिघाते तु युक्तिलेशैस्तमन्वियात् ।
देशकालार्थसम्बन्धपरिमाणक्रियादिभिः ॥२१४

युक्तिष्वप्यसमर्थासु शपथैरेनमर्दयेत् ।
देशकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥२१५

दीप्तो यं न दहत्यग्निरापोऽन्तर्धारयन्ति यम् ।
स तरत्यभिशापं तं किल्विषी स्याद् विपर्यये ॥२१६

स्त्रीणां शीलाभियोगे च स्तेयसाहसयोरपि ।
एष एव विधिर्दृष्टः सर्वार्थापह्नवेषु यः ॥२१७

शपथा ह्यृषिदेवानां पुरा सृष्टाः स्वयम्भुवा ।
वशिष्ठः शपथं शेपे यातुधानेति शब्दितः ॥२१८

सप्तर्षयस्तथा सेन्द्राः पुष्करार्थे तपोधनाः ।
शेपुः शपथमव्यग्राः परस्परविशुद्धये ॥२१९
अयुक्तं साहसं कृत्वा प्रत्यापत्तिं भजेत यः ।
ब्रूयात् स्वयं वा सदसि तस्यार्धविनयः स्मृतः ॥२२०
गूहमानस्तु दौश्शील्याद् यदि पापं स ह्रीयते ।
सभ्याश्चास्य न दुष्यन्ति तीव्रो दण्डश्च पार्थिवात् ॥२२१

इति ऋणादानं प्रथमं विवादपदम् ॥

—❀::❀—

## अथौपनिधिकं द्वितीयं विवादपदम् ।

स्वद्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत् प्रोक्तं व्यवहारपदं बुधैः ॥१
अन्यद्रव्यव्यवहितं द्रव्यमव्याकृतं च यत् ।
निक्षिप्यते परगृहे तदौपनिधिकं स्मृतम् ॥२
स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद् विपर्यये ॥३
याच्यमानस्तु यो दात्वा निक्षेपं न प्रयच्छति ।
दण्ड्यः स राज्ञा दाप्यश्च नष्टे दाप्यश्च तत्समम् ॥४
यश्चार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया ।
तत्रापि दण्ड्यः स भवेत् तच्च सोदयमाप्नुयात् ॥५

ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः।
दैवराजकृते तद्वन्न चेत् तज्जिह्मकारितम् ॥६
एष एव विधिर्दृष्टो याचितान्वाहितादिषु।
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च ॥७
प्रतिगृह्णाति पोगण्डं यश्च सप्रधनं नरः।
तस्याप्येष विधिर्दृष्टः षडेते विधयः समाः ॥८

इति औपनिधिकं द्वितीयं विवादपदम्।

---

## अथ सम्भूयसमुत्थानं तृतीयं विवादपदम्।

वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते।
तत् सम्भूयसमुत्थानं व्यवहारपदं स्मृतम् ॥१
फलहेतोरुपायेन कर्म सम्भूय कुर्वताम्।
आधारभूतः प्रक्षेपस्तेनोत्तिष्ठेयुरंशतः ॥२
समोऽतिरिक्तो हीनो वा यत्रांशो यस्य तादृशः।
क्षयव्ययौ तथा वृद्धिस्तस्य तत्र तथाविधा ॥३
भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम्।
कुर्युस्ते व्यवहारेण समये स्वे व्यवस्थिताः ॥४
प्रमादान्नाशितं दाप्यः प्रतिषिद्धकृतं च यत्।
असन्दिष्टं च यत् कुर्यात् सर्वैः सम्भूयकारिभिः ॥५

दैवतस्कर राजोत्थे व्यसने समुपस्थिते।
यस्तत् स्वशक्त्या संरक्षेत् तस्यांशो दशमः स्मृतः ॥६
एकस्य चेत् तद्व्यसनं दायादोऽस्य तदाप्नुयात्।
अन्यो वासति दायादेऽशक्तश्चेत् सर्व एव वा ॥७
ऋत्विजां व्यसनेऽप्येवमन्यस्तत्कर्म निस्तरेत्।
लभेत दक्षिणाभागं स तस्मात् सम्प्रकल्पितम् ॥८
ऋत्विग् याज्यमदुष्टं यस्त्यजेदनपकारिणम्।
अदुष्टमृत्विजं याज्यो विनेयौ तावुभावपि ॥९
ऋत्विक् तु त्रिविधः प्रोक्तः पूर्वैर्जुष्टः स्वयंवृतः।
यदृच्छया च यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम् ॥१०
क्रमागतेष्वेष धर्मो वृतेष्वृत्विक्षु च स्वयम्।
यादृच्छिके तु सांयाज्ये तत्त्यागे नास्ति किल्बिषम् ॥११
शुल्कस्थानं वणिक् प्राप्तः शुल्कं दद्याद् यथोपगम्।
न तद् व्यतिहरेद् राज्ञां बलिरेष प्रकल्पितः ॥१२
शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी।
मिथ्योक्त्वा च परीमाणं दाप्योऽष्टगुणमत्ययम् ॥१३
कश्चिच्चेत् सञ्चरन् देशात्प्रेयादभ्यागतो वणिक्।
राजास्य भाण्डं संरक्षेद् यावद्दायाददर्शनम् ॥१४
दायादेऽसति बन्धुभ्यो ज्ञातिभ्योऽस्य समर्पयेत्।
तदभावे सुगुप्तं तद् धारयेद् दशतीः समाः ॥१५
अस्वामिकमदायादं दशवर्षोषितं ततः।
राजा तदात्मसात् कुर्यादेवं धर्मो न हीयते ॥१६

इति सम्भूयसमुत्थानं तृतीयं विवादपदम्।

## अथ दत्ताप्रदानिकं चतुर्थं विवादपदम् ।

दत्त्वा द्रव्यमसम्यग् यः पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम तद् विवादपदं स्मृतम् ॥१
अथ देयमदेयं च दत्तं चादत्तमेव च ।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥२
तत्रेहाष्टावदेयानि देयमेकविधं स्मृतम् ।
दत्तं सप्तविधं विद्याददत्तं षोडशात्मकम् ॥३
अन्वाहितं याचितकमाधिं साधारणं च यत् ।
निक्षेपं पुत्रदारं च सर्वस्वं चान्वये सति ॥४
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ॥५
कुटुम्बभरणाद् द्रव्यं यत्किञ्चिदतिरिच्यते ।
तद् देयमुपहत्यान्यद् ददद्दागः समाप्नुयात् ॥६
पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात् प्रत्युपकारितम् ।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः ॥७
अदत्तं तु भयक्रोधवेषशोकरुजान्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥८
बालप्रमूढास्वतन्त्रमत्तोन्मत्तापवर्जितम् ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥९
अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसंहिते ।
यद् दत्तं स्यादविज्ञानाददत्तं तत् प्रकीर्तितम् ॥१०

गृह्णात्यदत्तं यो लोभाद् यश्चादेयं प्रयच्छति।
अदत्तादायको दण्ड्यस्तथादेयस्य दायकः ॥११

इति दत्ताप्रदानिकं चतुर्थं विवादपदम्॥

---

## अथाभ्युपेत्याशुश्रूषा पञ्चमं विवादपदम्।

अभ्युपेत्य च शुश्रूषां यस्तां न प्रतिपद्यते।
अशुश्रूषाभ्युपेत्येति विवादपदमुच्यते ॥१
शुश्रूषकः पञ्चविधः शास्त्रे दृष्टो मनीषिभिः।
चतुर्विधः कर्मकरः शेषा दासास्त्रिपञ्चकाः ॥२
शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत्।
एते कर्मकराः प्रोक्ता दासास्तु गृहजादयः ॥३
सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः।
जातिकर्मकृतस्तूक्तो विशेषो वृत्तिरेव च ॥४
कर्मापि द्विविधं ज्ञेयमशुभं शुभमेव च।
अशुभं दासकर्मोक्तं शेषं कर्मकृतः स्मृतम् ॥५
गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥६
इष्टतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः।
अशुभं कर्म विज्ञेयं शुभमन्यदतः परम् ॥७

आ विद्याग्रहणाच्छिष्यः शुश्रूषन् प्रयतो गुरुम्।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥८
ब्रह्मचारी चरेद् भैक्षमधःशाय्यनलङ्कृतः।
जघन्यशायी सर्वेषां पूर्वोत्थायी गुरोर्गृहे ॥९
नासन्दिष्टः प्रतिष्ठेत तिष्ठेद् वापि गुरुं क्वचित्।
सन्दिष्टः कर्म कुर्वीत शक्तश्चेदविलम्बयन ॥१०
यथाकालमधीयीत यावन्न विमना गुरुः।
आसीनोऽधो गुरोः कूर्चे फलके वा समाहितः ॥११
अनुशिष्यश्च गुरुणा न चेदनुविधीयते।
अवधेनाथवा शिष्यान् रज्ज्वा वेणुदलेन वा ॥१२
भृशं न ताडयेदेनं नोत्तमाङ्गे न वक्षसि।
अनुशिष्य च विश्वास्यो दण्ड्यो राज्ञान्यथा गुरुः ॥१३
समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम्।
प्रतीयात् स्वगृहानेषा शिष्यवृत्तिरुदाहृता ॥१४
स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥१५
आचार्यः शिक्षयेदेनं स्वगृहाद् दत्तभोजनम्।
नचान्यत् कारयेत् कर्म पुत्रवच्चैनमाचरेत् ॥१६
शिक्षयन्तमदुष्टं च य आचार्यं परित्यजेत्।
बलाद् वासयितव्यः स्याद् वधबन्धौ च सोऽर्हति ॥१७
शिक्षितोऽपि कृतं कालमन्तेवासी समाप्नुयात्।
तत्र कर्म च यत् कुर्यादाचार्यस्यैव तत्फलम् ॥१८

गृहीतशिल्पः समये कृत्वाचार्यं प्रदक्षिणम् ।
शिक्षितश्चानुमान्यैनमन्तेवासी निवर्तयेत् ॥१९
भृतकस्त्रिविधो ज्ञेय उत्तमो मध्यमोऽधमः ।
शक्तिभक्त्यनुरूपा स्यादेषां कर्माश्रया भृतिः ॥२०
उत्तमस्त्वायुधीयोऽत्र मध्यमस्तु कृषीवलः ।
अधमो भारवाहः स्यादित्येवं त्रिविधो भृतः ॥२१
अर्थेष्वधिकृतो यः स्यात् कुटुम्बस्य तथोपरि ।
सोऽधिकर्मकरो ज्ञेयः स च कौटुम्बिकः स्मृतः ॥२२
शुभकर्मकरा ह्येते चत्वारः समुदाहृता ।
जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः ॥२३
गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अशनादिभृतस्तद्वदाधत्तः स्वामिना च यः ॥२४
ऋणाच्च मोक्षितोऽनल्पाद् युद्धप्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यापसृतः कृतः ॥२५
भक्तदासश्च विज्ञेयस्तथैव वडबाभृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥२६
तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्र(दासा ? सादा)न् स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥२७
यश्चैषां स्वामिनं कश्चिन्मोक्षयेत् प्राणसंशयात् ।
दासत्वात् स विमुच्येत पुत्रभागं लभेत च ॥२८
अन्नाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ।
सम्भक्षितं यद् दुर्भिक्षे न तच्छुध्येत कर्मणा ॥२९

आधत्तोऽथ धनं दत्त्वा स्वामी यद्येनमुद्धरेत्।
अथोपगमयेदेनं सोऽपि क्रीतादनन्तरः ॥३०
दत्त्वा तु सोदयमृणमृणी दास्याद् विमुच्यते।
कृतकालाभ्युपगमात् कृतकोऽपि विमुच्यते ॥३१
तवाहमित्युपगतो युद्धप्राप्तः पणे जितः।
प्रतिपूरुषदानेन मुच्येरंस्तुल्यकर्मणा ॥३२
राज्ञ एव तु दासः स्यात् प्रव्रज्यापसृतो नरः।
न तस्य प्रतिमोक्षोऽस्ति विशुद्धिर्वा कथञ्चन ॥३३
भक्तस्योपेक्षणात् सद्यो भक्तदासः प्रमुच्यते।
निग्रहाद् बडवायाश्च मुच्यते बडवाभृतः ॥३४
विक्रीणाति स्वतन्त्रः सन् य आत्मानं नराधमः।
सुजघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते ॥३५
चोरापहृतविक्रीता ये च दासीकृता बलात्।
राज्ञा मोक्षयितव्यास्ते दासत्वं तेषु नेष्यते ॥३६
वर्णानां प्रातिलोम्येन दासत्वं न विधीयते।
स्वधर्मत्यागिनोऽन्यत्र दारवद् दासता मता ॥३७
तवास्मीति य आत्मानमस्वतन्त्रः प्रयच्छति।
न स तं प्राप्नुयात् कामं पूर्वस्वामी लभेत तम् ॥३८
अधनास्त्रय एवोक्ता भार्या दासस्तथा सुतः।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥३९
स्वदासमिच्छेद् यं कर्तुमदासं प्रीतमानसः।
स्कन्धादादाय तस्याथ भिन्द्यात् कुम्भं सहाम्भसा ॥४०

अक्षताभिः सपुष्पाभिर्मूर्धन्येनमवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखं तमथोत्सृजेत् ॥४१
ततःप्रभृति वक्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नः प्रतिगृह्यश्च भवत्यभिमतश्च सः ॥४२

इत्यभ्युपेत्याशुश्रूषा पञ्चमं विवादपदम् ।

---

## अथ वेतनस्यानपाकर्म षष्ठं विवादपदम् ।

भृतानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद् विवादपदं स्मृतम् ॥१
भृत्याय वेतनं दद्यात् कर्मस्वामी यथाकृतम् ।
आदौ मध्येऽवसाने वा कर्मणो यद् विनिश्चितम् ॥२
भृतावनिश्चितायां तु दशभागं समाप्नुयुः ।
लाभगोबीजसस्यानां वणिग्गोपकृषीवलाः ॥३
कर्मोपकरणं चैषां क्रियां प्रति यदर्पितम् ।
आप्तभावेन कुर्वीत न जिह्मेन समाचरेत् ॥४
कर्माकुर्वन् प्रतिश्रुत्य कार्यो दत्त्वा भृतिं बलात् ।
भृतिं गृहीत्वाकुर्वाणो द्विगुणां भृतिमावहेत् ॥५
अनयन् नादयित्वा तु भाण्डं वा यानवाहने ।
दाप्यो भृतिचतुर्भागं सर्वामर्धपथे त्यजन् ॥६

कालेऽपूर्णे त्यजन् कर्म भृतिनाशमवाप्नुयात्।
स्वामिदोषादपक्रामेद् यावत् कृतकमालभेत् ॥७
भृतिमद्धागमाभाष्य पथि युग्यकृतं त्यजन्।
अददत् कारयित्वा तु कर्मैवं सोऽद्यां भृतिम् ॥८
अनयन् वाहकोऽप्येवं भृतिहानिमवाप्नुयात्।
द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन् ॥९
भाण्डं व्यसनमागच्छेद् यदि वाहकदोषतः।
दाप्यो यत् तत्र नश्येत्तु दैवराजकृतादृते ॥१०
गवां शताद् वत्सतरी धेनुः स्याद् द्विशताद् भृतिः।
प्रतिसंवत्सरं गोपे सन्दोहो वाष्टमेऽहनि ॥११
उपानयेद् गा गोपाय प्रत्यहं रजनीक्षये।
चीर्णाः पीताश्च ता (गा ? गो) पः सायाह्ने प्रत्युपानयेत् ॥१२
स्याच्चेद् गोव्यसनं गोपो व्यायच्छेत् तत्र शक्तितः।
अशक्तावभिपत्यारं स्वामिने तन्निवेदयेत् ॥१३
अव्यायच्छन्नविक्रोशन् स्वामिने चानिवेदयन्।
वोढुमर्हति गोपस्तं विनयं चैव राजतः ॥१४
नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम्।
हीनं पुरुषकारेण गोपायैव निपातयेत् ॥१५
अजाविके तथा रुद्धे वृकैः पाले त्वनायति।
यत् प्रसह्य वृको हन्यात् पाले तत् किल्विषं भवेत् १६
तासामनवरुद्धानां चरन्तीनां मिथो वने।
याः प्रसह्य वृको हन्यान्न पालस्तत्र किल्विषी ॥१७

विघुष्य तु हृतं चोरैर्न पालो दातुमर्हति।
यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥१८
एतेन सर्वपालानां विवादः समुदाहृतः।
मृतंषे तु विशुद्धिः स्यात् पालस्याङ्कादिदर्शनात् ॥१६
शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विस्तदा (भवे? वहे)त्।
अप्रयच्छंस्तदा शुल्कमनुभूय पुमांस्त्रियम् ॥२०
अयोनौ क्रमते यस्तु वहुभिर्वापि वासयेत्।
शुल्कमष्टगुणं दाप्यो विनयस्तावदेव च ॥२१
पराजिरे गृहं कृत्वा स्तोमं दत्त्वा वसेत् तु यः।
स तद् गृहीत्वा निर्गच्छेत् त्यक्त्वा सर्वं मुधोषितः ॥२२
स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत्।
ग्रहीतुराभवेद् भग्नं नष्टं वान्यत्र संप्लवात् ॥२३

इति वेतनस्यानपाककर्म षष्ठं विवादपदम् ॥

---

## अथ अस्वामिविक्रयः सप्तमं विवादपदम्।

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा।
विक्रीयते परोक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥१
द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी तदाप्नुयात्।
प्रकाशं क्रयतः शुद्धिः क्रेतुः स्तेयं रहःक्रयात् ॥२

अस्वाम्यनुमताद् दासादसतश्च जनाद् रहः।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग् भवेत्॥३

न गूहेदागमं क्रेता शुद्धिर्ह्यस्य तदागमात्।
विपर्यये तुल्यदोषः सर्वं तद्दोषमर्हति॥४

विक्रेता स्वामिनेऽर्थं च क्रेतुर्मूल्यं च तत्कृतम्।
दद्याद् दण्डं तथा राज्ञे विधिरस्वामिविक्रये॥५

परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम्।
राजगामी निधिः सर्वः सर्वेषां ब्राह्मणादृते॥६

ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राज्ञे निवेदयेत्।
तेन दत्तं च भुञ्जीत स्तेनः स्यादनिवेदयन्॥७

स्वमप्यर्थं तथा नष्टं लब्ध्वा राज्ञे निवेदयेत्।
गृह्णीयात् तत्र तं शुद्धमशुद्धः स्यादतोऽन्यथा॥८

इति अस्वामिविक्रयः सप्तमं विवादपदम्॥

---

## अथ विक्रीयासम्प्रदानमष्टमं विवादपदम्।

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रयच्छति।
विक्रीयासम्प्रदानं तद् विवादपदमुच्यते॥१

लोकेऽस्मिन् द्विविधं द्रव्यं स्थावरं जङ्गमं तथा।
क्रयविक्रयधर्मेषु सर्वं तत् पण्यमुच्यते॥२

षड्विधस्तस्य तु बुधैर्दानादानविधिक्रमः ।
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया ॥३
विक्रीय पण्यं मूल्येन यः क्रेतुर्न प्रयच्छति ।
स्थावरस्य क्षयं दाप्यो जङ्गमस्य क्रियाफलम् ॥४
अर्घश्चेदपहीयेत सोदयं पण्यमाभवेत् ।
स्थानिनामेष नियमो दिग्लाभो दिग्विचारिणाम् ॥५
उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छतः ॥६
निर्दोषं दर्शयित्वा तु यः सदोषं प्रयच्छति ।
मूल्यं स द्विगुणं दाप्यो विनयं तावदेव च ॥७
तथान्यहस्ते विक्रीय योऽन्यहस्ते प्रयच्छति ।
सोऽपि तद्द्विगुणं दाप्यो विनयं तावदेव च ॥८
दीयमानं न गृह्णाति पण्यं क्रीतं हि यत् क्रयी ।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात् ॥९
दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तमूल्ये विक्रीते न विक्रेतुरतिक्रमः ॥१०
लाभार्थो वणिजां सर्वः पण्येषु क्रयविक्रयः ।
स च लाभोऽर्घमासाद्य महान् भवति वा नवा ॥११
तस्माद् देशे च काले च वणिगर्घं प्रकल्पयेत् ।
न जिह्मेन प्रवर्तेत श्रेयानेष वणिक्पथः ॥१२

इति विक्रीयासम्प्रदानमष्टमं विवादपदम् ॥

———

अथ क्रीत्वानुशयो नवमं विवादपदम् ।

क्रीत्वा मूल्येन यत् पण्यं क्रेता न बहु मन्यते ।
क्रीत्वानुशय इत्येतद् विवादपदमुच्यते ॥१
क्रीत्वा मूल्येन यत् पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतम् ॥२
द्वितीयेऽह्नि ददत् क्रेता मूल्यात् त्रिंशांशमावहेत् ।
द्विगुणं तत् तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥३
क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः ।
परीक्ष्याभिमतं क्रीतं विक्रेतुर्नाभवेत् पुनः ॥४
त्र्यहाद् दोह्यं परीक्षेत पञ्चाहाद् वाह्यमेवच ।
मुक्तावज्रप्रवालानां सप्ताहं स्यात् परीक्षणम् ॥५
द्विपदामर्धमासं स्यात् पुंसां तद्द्विगुणं स्त्रियाः ।
दशाहं सर्वबीजानामेकाहं लोहवाससाम् ॥६
परिभुक्तं तु यद् वासः क्लिन्नरूपं मलीमसम् ।
सदोषमपि विक्रीतं विक्रेतुर्नाभवेत् पुनः ॥७
मूल्याष्टभागो हीयेत सकृद् धौतस्य वाससः ।
द्विः पादस्त्रिस्त्रिभागश्च चतुर्धौतेऽर्धमेव च ॥८
अर्धक्षयात्तु परतः पादांशापचयः क्रमात् ।
यावत् क्षीणदशं जीर्णं जीर्णस्यानियमः क्षये ॥९
लोहानामपि सर्वेषां हेतुरग्निः क्रियाविधौ ।
क्षयः संस्क्रियमाणानां तेषां दृष्टोऽग्निसङ्गमात् ॥१०

सुवर्णस्य क्षयो नास्ति रजतं द्विपलं शतम् ।
शतमष्टपलं ज्ञेयं क्षयः स्यात् त्रपुसीसयोः ॥११
ताम्रे पञ्चपलं विद्याद् विकारा ये च तन्मयाः ।
तद्धेतूनामनेकत्वादयसोऽनियमः क्षये ॥१२
तान्तवस्य च संस्कारे क्षयवृद्धी उदाहृते ।
यत्र कार्पासिकोर्णानां वृद्धिर्दशपलं शते ॥१३
स्थूलसूत्रवतामेषा मध्यानां पञ्चकं शते ।
त्रिपलं तु सुसूक्ष्माणामन्तः क्षय उदाहृतः ॥१४
त्रिंशांशो रोमविद्धस्य क्षयः कर्मकृतस्य च ।
कौशेयवल्कलानां तु नैव वृद्धिर्न च क्षयः ॥१५
क्रीत्वा नानुशयं कुर्याद् वणिक् पण्ये विचक्षणः ।
क्षयवृद्धी च जानीयात् पण्यानामागमं तथा ॥१६

इति क्रीत्वानुशयो नवमं विवादपम् ॥

---

## अथ समयस्यानपाकर्म दशमं विवादपदम् ।

पाषण्डनैगमादीनां स्थितिः समय उच्यते ।
समयस्यानपाकर्म तद् विवादपदं स्मृतम् ॥१
पाषण्डनैगमश्रेणीपूगव्रातगणादिषु ।
संरक्षेत् समयं राजा दुर्गे जनपदे तथा ॥२
यो धर्मः कर्म यच्चैषामुपस्थानविधिश्च यः ।
यच्चैषां (प्रत्यु ? वृत्त्यु)पादानमनुमन्येत तत् तथा ॥३

प्रतिकूलं च यद् राज्ञः प्रकृत्यवमतं च यत्।
बाधकं च यदर्थानां तत् तेभ्यो विनिवर्तयेत्॥४

मिथः सङ्घातकरणमहिते शस्त्रधारणम्।
परस्परोपतापं च तेषां राजा न मर्षयेत्॥५

पृथग् गणान् ये विभिन्द्युस्ते विनेया विशेषतः।
आवहेयुर्भयं घोरं व्याधिवत् ते ह्युपेक्षिताः॥६

दोषवत्करणं यत् स्यादनाम्नायप्रकल्पितम्।
प्रवृत्तमपि तद् राजा श्रेयस्कामो निवर्तयेत्॥७

इति समयस्यानपाकर्म दशमं विवादपदम्॥

.........

## अथ क्षेत्रविवाद एकादशं विवादपदम्।

सेतुकेदारमर्यादा विकृष्टाकृष्टनिश्चयाः।
क्षेत्राधिकारा यत्र स्युर्विवादः क्षेत्रजः स तु॥१

क्षेत्रसीमाविरोधे तु सामन्तेभ्यो विनिश्चयः।
नगरग्रामगणिनो ये च वृद्धतमा नराः॥२

ग्रामसीमासु च बहिर्ये स्युस्तत्कृषिजीविनः।
गोपशाकुनिकव्याधा ये चान्ये वनगोचराः॥३

समुन्नयेयुस्ते सीमां लक्षणैरुपलक्षिताम्।
तुषाङ्गारकपालानां कुम्भैरायतनैर्द्रुमैः॥४

अभिज्ञानैश्च वल्मीकस्थलनिम्नोन्नतादिभिः ।
केदारागारमार्गैश्च पुराणैः सेतुभिस्तथा ॥५

निम्नगापहृतोत्सृष्टनष्टचिह्नासु भूमिषु ।
तत्प्रदेशानुमानाच्च प्रमाणैर्भोगदर्शनैः ॥६

अथ चेदनृतं ब्रूयुः सामन्तास्तद्विनिर्णये ।
सर्वे पृथक् पृथग् दण्ड्या राज्ञा मध्यमसाहसम् ॥७

गणिवृद्धादयस्त्वन्ये दण्डगत्या पृथक् पृथक् ।
विनेयाः प्रथमेन स्युः साहसेनानृते स्थिताः ॥८

नैकः समुन्नयेत् सीमां नरः प्रत्ययवानपि ।
गुरुत्वादस्य धर्मस्य क्रियैषा बहुषु स्मृता ॥९

एकश्चेदुन्नयेत् सीमां सोपवासः समुन्नयेत् ।
रक्तमाल्याम्बरधरः क्षितिमारोप्य मूर्धनि ॥१०

यदात्र न स्युर्ज्ञातारः सीमाया नच लक्षणम् ।
ततो राजा द्वयोः सीमामुद्धरेदिष्टतः स्वयम् ॥११

अनेनैव गृहोद्यानिपानायतनादिषु ।
विवादविधिराख्यातस्तथा ग्रामान्तरेषु च ॥१२

अवस्करस्थलश्वभ्रमार्गस्यन्दनिकादिभिः ।
चतुष्पथसुरस्थानरथ्यामार्गान्न दूषयेत् ॥१३

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोऽल्पदोषश्चेद् वृद्धिरिष्टा क्षये सति ॥१४

सेतुस्तु द्विविधो ज्ञेयः खन्यो बध्यस्तथैव च ।
तोयप्रवर्तने खन्यो बध्यः स्याद् विनिवर्तने ॥१५

नान्तरेणोदकं सस्यं नाशोऽप्यत्युदकेन तु।
यावाननुदके दोषस्तावानत्युदके स्मृतः॥१६
पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनं तु यः।
सेतुं प्रवर्तयेत् कश्चिन्न स तत्फलभाग् भवेत्॥१७
मृते वा स्वामिनि पुनस्तद्वंश्ये चापि मानवे।
राजानमामन्त्र्य ततः प्रकुर्यात् सेतुकर्म तत्॥१८
अतोऽन्यथा क्लेशभाक् स्यान्मृगव्याधनिदर्शनात्।
इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति॥१९
अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः।
क्षेत्रं चेद् विकृषेत् कश्चिदश्नुवीत स तत्फलम्॥२०
विकृष्यमाणे क्षेत्रे चेत् क्षेत्रिकः पुनराव्रजेत्।
खिलोपचारं तत्सर्वं दत्त्वा स्वं क्षेत्रमाप्नुयात्॥२१
तदष्टभागोपचयाद् यावत् सप्त समा गताः।
सम्प्राप्ते त्वष्टमे वर्षे भुक्तं क्षेत्रं लभेत सः॥२२
संवत्सरेणार्धखिलं खिलं स्याद् वत्सरैस्त्रिभिः।
पञ्चवर्षावसन्नं तु स्यात् क्षेत्रमटवीसमम्॥२३
क्षेत्रं त्रिपुरुषं यत्र गृहं वा स्यात् क्रमागतम्।
राजप्रसादादन्यत्र न तद्भोगः परं नयेत्॥२४
उत्क्रम्य तु वृतिं यत्र सस्यघातो गवादिभिः।
पालो दण्ड्यो भवेत् तत्र स चेच्छक्तो न वारयेत्॥२५
समूलसस्यनाशे तु तत्स्वामी धान्यमाप्नुयात्।
वधेन पालो मुच्येत दण्डं स्वामिनि पातयेत्॥२६

गौः प्रसूता दशाहात् तु महोक्षाजाविकुञ्जराः।
निवार्यास्तु प्रयत्नेन तेषां स्वामी न दण्डभाक्॥२७
माषं गां दापयेद् दण्डं द्वौ माषौ महिषीं तथा।
अजाविके च वत्से च दण्डः स्यादर्धमाषकः॥२८
अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः।
अदण्ड्या गर्भिणी गौश्च सूतिका चातिसारिणी॥२९
प्रोक्तः स द्विगुणः सन्ने वसन्त्यां तु चतुर्गुणः।
प्रत्यक्षचारकाणां तु चोरदण्डः स्मृतस्तथा॥३०
या नष्टाः पालदोषेण गावः क्षेत्रसमाश्रिताः।
न तत्र गोमिनो दण्डः पालस्तद्दण्डमर्हति॥३१
राजग्राहगृहीतो वा वज्राशनिहतोऽपि वा।
अथ सर्पेण वा दष्टो गिर्यग्रात् पतितोऽपि वा॥३२
न तत्र पालदोषः स्यान्नैव दोषोऽस्ति गोमिनाम्।
गोभिस्तु भक्षितं धान्यं यो नरः प्रतिमार्गति॥३३
सामन्तस्य शदो देयो धान्यं यत् तत्र वापितम्।
गवत्रं गोमिने देयं धान्यं तत्कृषकस्य तु॥३४
ग्रामोपान्ते च यत् क्षेत्रं विवीतान्ते महापथे।
अनावृतं चेत् तन्नाशे न गोपस्य व्यतिक्रमः॥३५
पथिक्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत्।
न लङ्घयेत् पशुर्नाश्वो न भिन्द्याद् यां च सूकरः॥३६
खातखातस्य केदारमाहुः शल्यवतो मृगम्।
इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति॥३७

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः।
विक्रुश्यमाणे क्षेत्रे चेत् क्षेत्रिकः पुनरात्रजेत् ॥३८
बीजापचारं तत् सर्वं दत्त्वा स्वं क्षेत्रमाप्नुयात्।
गृहं क्षेत्रं च विज्ञेयं वासहेतुः कुटुम्बिनाम् ॥३९
वृद्धे जनपदे राज्ञो धर्मः कोशश्च वर्धते।
हीयते हीयमाने तु वृद्धिहेतुमतः श्रयेत् ॥४०

इति क्षेत्रविवाद एकादशं विवादपदम् ॥

.........

## अथ स्त्रीपुंसयोगो द्वादशं विवादपदम्।

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते।
स्त्रीपुंसयोगसंज्ञं तु विवादपदमुच्यते ॥१
स्त्रीपुंसयोस्तु सम्बन्धाद् वरणं प्राग् विधीयते।
वरणाद् ग्रहणं पाणेः संस्कारोऽथ द्विलक्षणः ॥२
तयोरनियतं प्रोक्तं वरणं दोषदर्शनाद्।
पाणिग्रहणमन्त्राभ्यां नियतं दारलक्षणम् ॥३
ब्राह्मणक्षत्रियविशां शूद्राणां च परिग्रहे।
स्वजात्या श्रेयसी भार्या स्वजात्यश्च पतिः स्त्रियोः ॥४
ब्राह्मणस्यानुलोम्येन स्त्रियोऽन्यास्तिस्र एव तु।
शूद्रायाः प्रातिलोम्येन तथान्ये पतयस्त्रयः ॥५

द्वे भार्ये क्षत्रियस्यान्ये वैश्यस्यैका प्रकीर्तिता ।
वैश्याया द्वौ पती अन्या एकोऽन्यः क्षत्रियापतिः ॥६
आ सप्तमात् पञ्चमाच्च बन्धुभ्यः पितृमातृतः ।
अविवाह्याः सगोत्राः स्युः समानप्रवरास्तथा ॥७
परीक्ष्य पुरुषं पुंस्त्वे निजैरेवाङ्गलक्षणैः ।
पुमांश्चेदविकल्पेन स कन्यां लब्धुमर्हति ॥८
सुबद्धजत्रुजान्वस्थिसुबद्धांसशिरोधरः ।
स्थूलघाटातनूजत्वगविलग्नगतिस्वरः ॥६
विट् चास्य प्लवते नाप्सु रावि मूत्रं च फेनिलम् ।
पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु पण्डकः ॥१०
चतुर्दशविधः शास्त्रे स तु दृष्टो मनीषिभिः ।
चिकित्स्यश्चाचिकित्स्यश्च तेषामुक्तो विधिः क्रमात् ॥११
निसर्गपण्डो वध्रश्च पक्षपण्डस्तथैव च ।
अभिशापाद् गुरो रोगाद् देवक्रोधात् तथैव च ॥१२
ईर्ष्यापण्डश्च सेव्यश्च वातरेता मुखेभगः ।
आक्षिप्तमोघबीजश्च शालीनोऽन्यपतिस्तथा ॥१३
तत्राद्यावप्रतीकारौ पक्षाख्यं मासमाचरेत् ।
अनुक्रमत्रयस्यास्य कालः संवत्सरः स्मृतः ॥१४
ईर्ष्यापण्डादयो येऽन्ये चत्वारः समुदाहृताः ।
सन्त्यक्तव्याः पतितवत् क्षतयोन्या अपि स्त्रियाः ॥१५
आक्षिप्तमोघबीजौ च पत्यावप्रतिकर्मणि ।
पतिरन्यः स्मृतो नार्या वत्सरं सम्प्रतीक्ष्य तु ॥१६

शालीनस्यापि धृष्टस्त्रीसंयोगाद् भज्यते ध्वजः।
तं हीनवेषमत्तस्त्रीबालान्धाभिरुपक्रमेत्॥१७
अन्यस्यां यो मनुष्यः स्यादमनुष्यः स्वयोषिति।
लभेत सान्यं भर्तारमेतत् कार्यं प्रजापतेः॥१८
अपत्यार्थं स्त्रियः सृष्टाः स्त्री क्षेत्रं बीजिनः प्रजाः।
क्षेत्रं बीजवते देयं नाबीजी क्षेत्रमर्हति॥१६
पिता दद्यात् स्वयं कन्यां भ्राता वानुमते पितुः।
मातामहो मातुलश्च सकुल्या बान्धवास्तथा॥२०
माताभावे तु सर्वेषां प्रकृतौ यदि वर्तते।
तस्यामप्रकृतिस्थायां दद्युः कन्यां सजातयः॥२१
यदा तु नैव कश्चित् स्यात् कन्या राजानमाव्रजेत्।
अनुज्ञया वरं तस्य प्रतीत्य वरयेत् स्वयम्॥२२
सवर्णमनुरूपं च कुलरूपवयःश्रुतैः।
सह धर्मं चरेत् तेन पुत्रांश्चोत्पादयेत् ततः॥२३
प्रतिगृह्य च यः कन्यां नरो देशान्तरं व्रजेत्।
त्रीनृतून् समतिक्रम्य कन्यान्यं वरयेद् वरम्॥२४
कन्या नर्तुमुपेक्षेत बान्धवेभ्यो निवेदयेत्।
ते चेन्न दद्युस्तां भर्त्रे ते स्युर्भ्रूणहभिः समाः॥२५
यावन्तश्चर्तवस्तस्याः समतीता विना पतिम्।
तावत्यो भ्रूणहत्याः स्युस्तस्य यो न ददाति ताम्॥२६
अतोऽप्रवृत्ते रजसि कन्यां दद्यात् पिता सकृत्।
महदेनः स्पृशेदेनमन्यथैष विधिः सताम्॥२७

सकृदंशो निपतति सकृत् कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सकृत् सकृत् ॥२८
ब्राह्मादिषु विवाहेषु पञ्चस्वेष विधिः स्मृतः।
गुणापेक्षं भवेद् दानमासुरादिषु च त्रिषु ॥२९
कन्यायां प्राप्तशुल्कायां ज्यायांश्चेद् वर आव्रजेत्।
धर्मार्थकामसंयुक्तं वाच्यं तत्रानृतं भवेत् ॥३०
नादुष्टां दूषयेत् कन्यां नादुष्टं दूषयेद् वरम्।
दोषे तु सति नागः स्यादन्योन्यं त्यजतोस्तयोः ॥३१
दत्त्वा न्यायेन यः कन्यां वराय न ददाति ताम्।
अदुष्टश्चेद् वरो राज्ञा स दण्ड्यस्तत्र चोरवत् ॥३२
यस्तु दोषवतीं कन्यामनाख्याय प्रयच्छति।
तस्य कुर्यान्नृपो दण्डं पूर्वसाहसचोदितम् ॥३३
अकन्येति तु यः कन्यां ब्रूयाद् द्वेषेण मानवः।
स शतं प्राप्नुयाद् दण्डं तस्या दोषमदर्शयन् ॥३४
प्रतिगृह्य तु यः कन्यामदुष्टामुत्सृजेद् वरः।
विनेयः सोऽप्यकामोऽपि कन्यां तामेव चोद्वहेत् ॥३५
दीर्घकुत्सितरोगार्ता व्यङ्गाः संस्पृष्टमैथुनाः।
धृष्टान्यगतभावाश्च कन्यादोषाः प्रकीर्तिताः ॥३६
उन्मत्तपतितक्लीवदुर्भगत्यक्तबान्धवाः।
कन्यादोषौ च यौ पूर्वावेष दोषगणो वरे ॥३७
अष्टौ विवाहा वर्णानां संस्काराख्याः प्रकीर्तिताः।
ब्राह्मस्तु प्रथमस्तेषां प्राजापत्यस्तथैव च ॥३८

आर्षश्चैवाथ दैवश्च गान्धर्वोऽथासुरस्तथा।
राक्षसोऽनन्तरस्तस्मात् पैशाचश्चाष्टमोऽधमः ॥३९
सत्कृत्याहूय कन्यां तु ब्राह्मो दद्यात् स्वलङ्कृताम्।
सह धर्मं चरेत्युक्त्वा प्राजापत्यो विधीयते ॥४०
वस्त्रगोमिथुने दत्त्वा विवाहस्त्वार्ष उच्यते।
अन्तर्वेद्यां तु दैवः स्यादृत्विजे कर्म कुर्वते ॥४१
इच्छन्तीमिच्छते प्राहुर्गान्धर्वो नाम पञ्चमः।
विवाहस्त्वासुरो ज्ञेयः शुल्कसंव्यवहारतः ॥४२
प्रसह्यहरणादुक्तो विवाहो राक्षसः स्मृतः।
सुप्तमत्तोपगमनात् पैशाचश्चाष्टमोऽधमः ॥४३
एषां तु धर्म्याश्चत्वारो ब्राह्माद्याः समुदाहृताः।
साधारणः स्याद् गान्धर्वस्त्रयोऽधर्म्यास्त्वतः परे ॥४४
परपूर्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम्।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥४५
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता।
पुनर्भूः प्रथमा सोक्ता पुनः संस्कारकर्मणा ॥४६
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते।
उत्पन्नसाहसान्यस्मै सा द्वितीया प्रकीर्तिता ॥४७
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते।
सवर्णायासपिण्डाय सा तृतीया प्रकीर्तिता ॥४८
प्रसूता वाप्रसूता वा पत्यावेव तु जीवति।
कामात् समाश्रयेदन्यं स्वैरिणी प्रथमा तु सा ॥४९

कौमारं पतिमुत्सृज्य या त्वन्यपुरुषाश्रिता।
पुनः पत्युर्गृहं यायात् सा द्वितीया प्रकीर्तिता ॥५०
मृते भर्तरि या प्राप्तान् देवरानप्यपास्य तु।
उपगच्छेत् परं कामात् सा तृतीया प्रकीर्तिता ॥५१
प्राप्ता देशाद् धनक्रीता क्षुत्पिपासातुरा च या।
तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥५२
पुनर्भुवामेष विधिः स्वैरिणीनां च कीर्तितः।
पूर्वा पूर्वाजघन्यासां श्रेयसी तूत्तरोत्तरा ॥५३
अपत्यमुत्पादयितुस्तासां या शुल्कतो हृता।
अशुल्कोपनतायां तु क्षेत्रिकस्यैव तद् भवेत् ॥५४
क्षेत्रिकस्य यदज्ञानात् क्षेत्रे बीजं प्रकीर्यते।
न तत्र बीजिनो भागः क्षेत्रिकस्यैव तद् भवेत् ॥५५
ओघवाताहृतं बीजं क्षेत्रे यस्य प्ररोहति।
फलभाग् यस्य तत् क्षेत्रं न बीजी फलभाग् भवेत् ॥५६
महोक्षो जनयेद् वत्सान् यस्य गोषु व्रजे चरन्।
तस्य ते यस्य ता गावो मोघं स्पन्दितमार्षभम् ॥५७
क्षेत्रिकानुमतं बीजं यस्य क्षेत्रे प्रमुच्यते।
तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम् ॥५८
नर्ते क्षेत्रं भवेत् सस्यं नच बीजं विनास्ति तत्।
अतोऽपत्यं द्वयोरिष्टं पितुर्मातुश्च धर्मतः ॥५९
नाथवत्या परगृहे संयुक्तस्य स्त्रिया सह।
दृष्टं संग्रहणं तज्ज्ञैर्नागतायाः स्वयं गृहे ॥६०

प्रदुष्टत्यक्तदारस्य क्लीबस्य क्षमकस्य च ।
स्वेच्छैरुपेयुषो दारैर्न दोषः साहसो भवेत् ॥६१

परस्त्रिया सहाकालेऽदेशे वा भवतो मिथः ।
स्थानसंभाषणामोदास्त्रयः संग्रहणक्रमाः ॥६२

नदीनां सङ्गमे तीर्थेष्वारामेषु वनेषु च ।
स्त्री पुमांश्च समेयातां ग्राह्यं संग्रहणं भवेत् ॥६३

दूतीप्रस्थापनैश्चैव लेखासंप्रेषणैरपि ।
अन्यैरपि व्यतीचारैः सर्वं संग्रहणं स्मृतम् ॥६४

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत् तया ।
परस्परस्यानुमते तत्र संग्रहणं भवेत् ॥६५

भक्ष्यैर्वा यदि वा भोज्यैर्वस्त्रैर्माल्यैस्तथैव च ।
संप्रेष्यमाणैर्गन्धैश्च सर्वं संग्रहणं भवेत् ॥६६

उपचारक्रिया केलिः स्पर्शो भूषणवाससाम् ।
सह खट्वासनं चैव सर्वं संग्रहणं स्मृतम् ॥६७

दर्पाद् वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत् ।
मयेयं भुक्तपूर्वेति सर्वं संग्रहणं स्मृतम् ॥६८

पाणौ यश्च निगृह्णीयाद् वेण्यां वस्त्रान्तरेऽपि वा ।
तिष्ठ तिष्ठेति वा ब्रूयाद् सर्वं संग्रहणं स्मृतम् ॥६९

स्वजात्यतिक्रमे पुंसामुक्तमुत्तमसाहसम् ।
विपर्यये मध्यमस्तु प्रतिलोमे प्रमापणम् ॥७०

कन्यायामसकामायां द्व्यङ्गुलस्यापकर्तनम् ।
उत्तमायां वधस्त्वेव सर्वस्वहरणं तथा ॥७१

सकामायां तु कन्यायां सवर्णे नास्त्यतिक्रमः ।
किन्त्वलङ्कृत्य सत्कृत्य स एवैनां समुद्वहेत् ॥७२
माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥७३
दुहिताचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या ॥७४
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्तनं दण्डो नान्यस्तत्र विधीयते ॥७५
पशुयोन्यामतिक्रम्य विनेयः सदशं शतम् ।
मध्यमं साहसं गोषु तदेवान्तावसायिषु ॥७६
अगम्यागामिनः शास्ति दण्डो राज्ञा प्रचोदितः ।
प्रायश्चित्तविधावत्र प्रायश्चित्तं विशोधनम् ॥७७
स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या ।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रातिलोम्यतः ॥७८
आस्वेव तु भुजिष्यासु दोषः स्यात् परदारवत् ।
गम्या अपि हि नोपेयास्ताश्चेदन्यपरिग्रहाः ॥७९
अनुत्पन्नप्रजायास्तु पतिः प्रेयाद् यदि स्त्रियाः ।
नियुक्ता गुरुभिर्गच्छेद् देवरं पुत्रकाम्यया ॥८०
स च तां प्रतिपद्येत तथैवा पुत्रजन्मनः ।
पुत्रे जाते निवर्तेत विप्लवः स्यादतोऽन्यथा ॥८१
घृतेनाभ्यज्य गात्राणि तैलेनाविकृतेन वा ।
मुखान्मुखं परिहरन् गात्रैर्गात्राण्यसंस्पृशन् ॥८२

नीरजस्कामनिच्छन्तीं वन्ध्यां पुत्रवतीं स्त्रियम्।
न गच्छेत् गर्भिणीं निन्द्यामनियुक्तां च वन्धुभिः ॥८३
अनियुक्ता तु या नारी देवराज्जनयेत् सुतम्।
जारजातमरिक्थीयं तमाहुर्धर्मवादिनः ॥८४
तथानियुक्तो भार्यायां यवीयान् ज्यायसो व्रजेत्।
यवीयसो वा यो ज्यायानुभौ तौ गुरुतल्पगौ ॥८५
कुले तदवशेषे तु सन्तानार्थं न कामतः।
नियुक्तो गुरुभिर्गच्छेद् भ्रा(तृ ? ता)भार्यां यवीयसः ॥८६
ज्येष्ठभार्यां कनिष्ठो वा गच्छेद् गुरुनियोगतः।
कुलसन्तानरक्षा तु फलं समधिगच्छतः ॥८७
अविद्यमाने तु गुरौ राज्ञो वाच्यः कुलक्षयः।
ततस्तद्वचनाद् गच्छेदनुशिष्यस्त्रियं च सः ॥८८
पूर्वोक्तेनैव विधिना स्नातां पुंसवने शुचिः।
सकृद्वा गर्भाधानाद् वा कृते गर्भे स्नुषैव सा ॥८९
अतोऽन्यथा वर्तमानः पुमान् स्त्री वापि कामतः।
विनेयौ सुभृशं राज्ञा किल्बीषी स्यादनिग्रहे ॥९०
ईर्ष्यासूयासमुत्थे तु संरम्भे रागहेतुके।
दम्पती विवदेयातां न ज्ञातिषु न राजनि ॥९१
अन्योन्यं त्यजतोर्नागः स्यादन्योन्यविरुद्धयोः।
स्त्रीपुंसयोर्नतूढाया व्यभिचारादृते स्त्रि(यः ? याः) ॥९२
व्यभिचारे स्त्रि(यो ? या) मौण्ड्यमधःशयनमेव च।
कदन्नं च कुवासश्च कर्म चावस्करोञ्छनम् ॥९३

स्त्रीधनभ्रष्टसर्वस्वां गर्भविस्राविणीं तथा ।
भर्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेद् गृहात् ॥९४
अनर्थशीलां सततं तथैवाप्रियवादिनीम् ।
पूर्वाशिनी च या भर्तुः स्त्रियं निर्वासयेद् बुधः ॥९५
वन्ध्यां स्त्रीजननीं निन्द्यां प्रतिकूलां च सर्वदा ।
कामं तां नाभिनन्देत कुर्वन्नेवं न दोषभाक् ॥९६
अनुरूपामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् ।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥९७
अज्ञातदोषादुष्टा या निर्गता नान्यमाश्रिता ।
बन्धुभिः सा नियोक्तव्या निर्बन्धुः स्वयमाश्रयेत् ॥९८
पत्यौ प्रव्रजिते नष्टे क्लीबेऽथ पतिते मृते ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥९९
अष्टौ वर्षाण्युदीक्षेत ब्राह्मणं प्रोषितं पतिम् ।
अप्रसूता तु चत्वारि परतोऽन्यं समाश्रयेत् ॥१००
क्षत्रिया षट् समास्तिष्ठेदप्रसूता समात्रयम् ।
वैश्या प्रसूता चत्वारि द्वे समे अप्रजा वसेत् ॥१०१
न शूद्रायाः स्मृतः कालो नच धर्मव्यतिक्रमः ।
विशेषतोऽप्रसूतायाः संवत्सरपरा स्थितिः ॥१०२
अप्रवृत्तौ स्मृतो धर्म एष प्रोषितयोषिताम् ।
जीवति श्रूयमाणे तु स्यादेष द्विगुणो विधिः ॥१०३
प्रजाप्रवृत्तौ भूतानां सृष्टिरेषा प्रजापतेः ।
अतोऽन्यथागमे स्त्रीणामेवं दोषो न विद्यते ॥१०४

आनुलोम्येन वर्णानां यज्जन्म स विधिः स्मृतः।
प्रातिलोम्येन यज्जन्म स ज्ञेयो वर्णसङ्करः॥१०५
अनन्तरः स्मृतः पुत्रः पुत्र एकान्तरस्तथा।
द्व्यन्तरश्चानुलोम्येन तथैव प्रतिलोमतः॥१०६
उग्रः पारशवश्चैव निषादश्चानुलोमतः।
उत्तमेभ्यस्त्रयस्त्रिभ्यः शूद्रापुत्राः प्रकीर्तिताः॥१०७
ब्राह्मण्यामपि चण्डालसूतवैदेहका अपि।
अपरेभ्यस्त्रयस्त्रिभ्यो विज्ञेयाः प्रतिलोमतः॥१०८
अम्बष्ठो मागधश्चैव क्षत्ता च क्षत्रियासुताः।
आनुलोम्येन तत्रैको द्वौ ज्ञेयौ प्रतिलोमतः॥१०९
वैश्यापुत्रास्तु दौष्यन्तयवनायोगवा अपि।
प्रातिलोम्येन तत्रैको द्वौ ज्ञेयावनुलोमजौ॥११०
सूताद्याः प्रतिलोमास्तु ज्ञेयावप्रतिलोमजौ।
ससङ्कराः श्वपाकाद्यास्तेषां त्रिस्सप्तकों (गु ? ग)णः॥१११
सवर्णो ब्राह्मणीपुत्रः क्षत्त्रियायामनन्तरः।
अम्बष्ठोग्रौ तथा पुत्रावेवं क्षत्रियवैश्ययोः॥११२
एकान्तरस्तु दौष्यन्तो वैश्यायां ब्राह्मणात् सुतः।
शूद्रायां (ब्राह्मणा ?क्षत्रिया)त् तद्वन्निषादो नाम जायते॥११३
शूद्रा पारशवं सूते ब्राह्मणाद् व्यन्तरं सुतम्।
आनुलोम्येन वर्णानां पुत्रा एते प्रकीर्तिताः॥११४
सूतश्च मागधश्चोभौ पुत्रावायोगवस्तथा।
प्रातिलोम्येन वर्णानां तद्वदेतेऽप्यनन्तराः॥११५

ब्राह्मण्येकान्तरं वैश्यात् सूते वैदेहकं सुतम् ।
क्षत्तारं क्षत्रिया शूद्रात् पुत्रमेकान्तरं तथा ॥११६
व्यन्तरः प्रातिलोम्येन पापिष्ठः सङ्करे सति ।
चण्डालो जायते शूद्राद् ब्राह्मणी यत्र मुह्यति ॥११७
राज्ञा परीक्ष्यं न यथा जायते वर्णसङ्करः ।
तस्माद् राज्ञा विशेषेण त्रयी रक्ष्या तु सङ्करात् ॥११८

इति स्त्रीपुंसयोगो द्वादशं विवादपदम् ॥

—❀०❀—

## अथ दायविभागस्त्रयोदशं विवादपदम् ।

विभागोऽर्थस्य पित्र्यस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं व्यवहारपदं बुधैः ॥१
पितर्युपरते पुत्रा विभजेयुर्धनं पितुः ।
मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ॥२
मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निरिष्टे वाप्यमरणे पितर्युपरतेऽस्पृहे ॥३
पितैव वा स्वयं पुत्रान् विभजेद् वयसि स्थितः ।
ज्येष्ठं श्रेष्ठविभागेन यथा वा स्वमतिर्भवेत् ॥४
बिभृयाद् वेच्छतः सर्वाञ्ज्येष्ठो भ्राता यथा पिता ।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षं कुले क्रिया ॥५

शौर्यभार्याधने हित्वा यच्च विद्याधनं भवेत् ।
त्रीण्येतान्यविभाज्यानि प्रसादो यश्च पैतृकः ॥६
मात्रा च स्वधनं दत्तं यस्मै स्यात् प्रीतिपूर्वकम् ।
तस्याप्येष विधिर्दृष्टो मातापीष्टे यथा पिता ॥७
अध्यग्न्यध्याहवनिकं भर्तृदायस्तथैव च ।
भ्रात्रा दत्तं पितृभ्यां च षड्विधं स्त्रीधनं स्मृतम् ॥८
स्त्रीधनं तदपत्यानां भर्तृगाम्यप्रजासु च ।
ब्राह्मादिषु चतुर्ष्वाहुः पितृगामीतरेषु तु ॥९
कुटुम्बं बिभृयाद् भ्रातुर्यो विद्यामधिगच्छति ।
भागं विद्याधनात् तस्मात् स लभेताश्रुतोऽपि सन् ॥१०
वैद्योऽवैद्याय नाकामो दद्यादंशं स्वतो धनात् ।
पितृद्रव्यं तदाश्रित्य न चेत् तेन तदाहृतम् ॥११
द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।
समांशभागिनी माता पुत्राणां स्यान्मृते धवे ॥१२
ज्येष्ठायांशोऽधिको देयो ज्येष्ठाय तु वरः स्मृतः ।
समांशभाजः शेषाः स्युरप्रत्ता भगिनी तथा ॥१३
क्षेत्रजेष्वपि पुत्रेषु तद्वज्जातेषु धर्मतः ।
वर्णावरेष्वंशहानिर्गूढजातेष्वनुक्रमात् ॥१४
पित्रैव तु विभक्ता ये हीनाधिकसमैर्धनैः ।
तेषां स एव भागः स्यात् सर्वस्य हि पिता प्रभुः ॥१५
कानीनश्च सहोढश्च गूढायां यश्च जायते ।
तेषां वोढा पिता ज्ञेयस्ते च भागहराः स्मृताः ॥१६

अज्ञातपितृको यस्तु कानीनो गूढमातृकः।
मातामहाय दद्यात्त्र पिण्डं रिक्थं हरेत च ॥१७
जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा।
अरिक्थभाजस्ते सर्वे बीजिनामेव ते स्मृताः ॥१८
दद्युस्ते बीजिनः पिण्डं माता चेच्छुल्कतो हृता।
अशुल्कोपनतायां तु पिण्डदा वोढुरेव ते ॥१६
पितृद्विट् पतितः पण्डो यश्च स्यादौपपातिकः।
औरसा अपि नैतेऽशं लभेरन् क्षेत्रजाः कुतः ॥२०
दीर्घतीव्रामयग्रस्ता जड्डोन्मत्तान्धपङ्गवः।
भर्तव्याः स्युः कुटुम्ब्यास्ते तत्पुत्रास्त्वंशभागिनः ॥२१
द्विरामुष्यायणा दद्युर्द्वाभ्यां पिण्डोदके पृथक्।
रिक्थादर्धांशमादद्युर्बीजिक्षेत्रिकयोस्तथा ॥२२
संसृष्टिनां तु यो भागस्तेषामेव स इष्यते।
अतोऽन्यथांशभाजो हि निर्बीजिष्वितरानियात् ॥२३
भ्रातॄणामप्रजः प्रेयात् कश्चिच्चेत् प्रव्रजेत् तथा।
विभजेयुर्धनं तस्य शेषास्ते स्त्रीधनाद् विना ॥२४
भरणं चास्य कुर्वीरंस्त्रीणामा जीवितक्षयात्।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तु ॥२५
स्याद् यस्य दुहिता तस्याः पित्र्यंशो भरणे मतः।
आ संस्काराद् भरेत्तैनां परतो बिभृयात् पतिः ॥२६
मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः।
विनियोगात्मरक्षासु भरणे च स ईश्वरः ॥२७

परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ।
तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥२८
पक्षद्वयावसाने तु राजा भर्ता स्मृतः स्त्रियाः ।
स तस्या भरणं कुर्यान्निगृह्णीयात् पथश्च्युताम् ॥२९
स्वातन्त्र्याद् विप्रणश्यन्ति कुले जाता अपि स्त्रियः ।
अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत् ॥३०
पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति वार्द्धके पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥३१
यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकं च यत् ।
भ्रातृभिस्तद् विभक्तव्यमृणी न स्यात् पिता यथा ॥३२
येषां च न कृताः पित्रा संस्कारविधयः क्रमात् ।
कर्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥३३
अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्याः संस्कारा भ्रातृणां पूर्वसंस्कृतैः ॥३४
कुटुम्बार्थेषु चोद्युक्तस्तत्कार्यं कुरुते च यः ।
स भ्रातृभिर्बृंहणीयो ग्रासाच्छादनभोजनैः ॥३५
विभागधर्मसन्देहे दायादानां विनिर्णये ।
ज्ञातिभिर्भागलेख्यैस्तु पृथक् का (यं ? र्या) प्रकल्पना ॥३६
भ्रातृणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि भवेदेषां पृथक् पृथक् ॥३७
दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथग् ज्ञेयाः पाकधर्मागमव्ययाः ॥३८

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युर्नाविभक्ताः परस्परम् ॥३९

येषां द्विधा क्रिया लोके प्रवर्तन्ते स्वरिक्थिनाम् ।
विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान् ॥४०

यद्येकजाता वहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न तेऽकृत्येषु सम्मताः ॥४१

स्वानंशान् यदि दद्युस्ते विक्रीणीयुरथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशते स्वधनस्य ते ॥४२

औरसः क्षेत्रजश्चैव पुत्रिकापुत्र एव च ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥४३

पौनर्भवोऽपविद्धश्च लब्धः क्रीतस्तथा कृतः ।
स्वयं चोपगतः पुत्रो द्वादशैत उदाहृताः ॥४४

तेषु षड् बन्धुदायादाः षडदायादबान्धवाः ।
पूर्वः पूर्वः स्मृतः श्रेष्ठो जघन्यो यो य उत्तरः ॥४५

क्रमादेते प्रपद्येरन् मृते पितरि तद्धनम् ।
ज्यायसो ज्यायसोऽभावे जघन्यस्तदवाप्नुयात् ॥४६

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात् ।
पुत्रश्च दुहिता चोक्तौ पितुः सन्तानकारकौ ॥४७

अभावे दुहितॄणां तु सकुल्या बान्धवास्तथा ।
ततः सजात्याः सर्वेषामभावे राजगामि तत् ॥४८

अन्यत्तु ब्राह्मणात् तत्तु राजा धर्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥४९

इति दायविभागस्त्रयोदशं विवादपदम् ॥

## अथ साहसं चतुर्दशं विवादपदम्।

सहसा क्रियते कर्म यत्किञ्चिद् बलदर्पितैः।
तत् साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥१
तत् पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥२
फलमूलोदकादीनां क्षेत्रोपकरणस्य च।
भङ्गाक्षेपावमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥३
वासःपश्वन्नपानानां गृहोपकरस्य च।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥४
व्यापादो विषशस्त्राद्यैः परदारप्रधर्षणम्।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥५
तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः ॥६
वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥७
अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥८
शिरसो मुण्डनं दण्डस्तस्य निर्वासनं पुरात्।
ललाटे चाभिशस्ताङ्को निर्याणं गर्दभेन च ॥९

स्यातां संव्यवहार्यौं तौ धृतदण्डौ तु पूर्वयोः ।
धृतदण्डोऽप्यसंभोज्यो ज्ञेय उत्तमसाहसे ॥१०
तस्यैव भेदः स्तेयं तु विशेषस्तत्र चोच्यते ।
आधेः साहसमाक्रम्य स्तेयमाधिच्छलेन तु ॥११
तदपि त्रिविधं प्रोक्तं द्रव्यापेक्षं महर्षिभिः ।
क्षुद्रमध्योत्तमानां तु द्रव्याणामपकर्षणात् ॥१२
मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ।
फलं चान्यकृतान्नं च क्षुद्रद्रव्यमुदाहृतम् ॥१३
वासः कौशेयवर्जं यद् गोवर्जं पशवस्तथा ।
हिरण्यवर्जं लोहं च मध्यं व्रीहियवा अपि ॥१४
हिरण्यरत्नकौशेयस्त्रीपुङ्गोगजवाजिनाम् ।
देवब्राह्मणराज्ञां च द्रव्यं विज्ञेयमुत्तमम् ॥१५
उपायैर्विविधैरेषां छलयित्वापकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥१६
सहोढग्रहणात् स्तेयं होढेऽसत्यतिभोगतः ।
शङ्कात्वसज्जनैकार्थ्यादनायव्ययतस्तथा ॥१७
भक्तावकाशदातारः स्तेनानां ये प्रसर्पताम ।
शक्तौ च य उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥१८
उत्क्रोशतां जनानां च ह्रियमाणे धनेऽपि च ।
श्रुत्वा ये नाभिधावन्ति तेऽपि तद्दोषभागिनः ॥१९
साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डः स्तेयेऽपि द्रव्येषु त्रिष्वनुक्रमात् ॥२०

गवादिषु प्रनष्टेषु द्रव्येष्वपहृतेषु वा ।
पदेनान्वेषणं कुर्युरामूलात् तद्विदो जनाः ॥२१
ग्रामे व्रजे विवीते वा यत्र सन्निपतेत् पदम् ।
वोढव्यं तद् भवेत् तेन नचेत् सोऽन्यत्र तन्नयेत् ॥२२
पदे प्रमूढे भग्ने वा विषमत्वाज्जनान्तिके ।
यस्त्वासन्नतरो ग्रामो व्रजो वा तत्र पातयेत् ॥२३
समेऽध्वनि द्वयोर्यत्र स्तेयप्रायोऽशुचिर्जनः ।
पूर्वापदानैर्दृष्टो वा संसृष्टो वा दुरात्मभिः ॥२४
ग्रामेष्वन्वेषणं कुर्युश्चण्डालवधकादयः ।
रात्रिसञ्चारिणो ये च बहिष्कुर्युर्बहिश्चराः ॥२५
स्तेनेष्वलभ्यमानेषु राजा दद्यात् स्वकाद् धनात् ।
उपेक्षमाणो ह्येनस्वी धर्मादर्थाच्च हीयते ॥२६

इति साहसं चतुर्दशं विवादपदम् ॥

—:**:—

## अथ वाग्दण्डपारुष्यं पञ्चदशं (षोडशं च) विवादपदम् ।

देशजातिकुलादीनामाक्रोशन्यङ्गसंहितम् ।
यद् वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥१
निष्ठुराश्लीलतीव्रत्वात् तदपि त्रिविधं स्मृतम् ।
गौरवानुक्रमादस्य दण्डोऽपि त्रिविधः स्मृतः ॥२

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ॥३
परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥४
तत्रापि दृष्टं त्रैविध्यं मृदुमध्योत्तमक्रमात् ।
अवगूरणनिस्सङ्गपातनक्षतदर्शनैः ॥५
हीनमध्योत्तमानां तु द्रव्याणां समतिक्रमात् ।
त्रीण्येव साहसान्याहुः प्रोक्तं कण्टकशोधनम् ॥६
विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि ।
विशुद्धिर्दण्डभाक्त्वं च तत्र सम्बध्यते यथा ॥७
पारुष्ये सति संरम्भादुत्पन्ने क्षुब्धयोर्द्वयोः ।
स मान्यते यः क्षमते दण्डभाग् योऽतिवर्तते ॥८
पारुष्यदोषधुतयोर्युगपत् सम्प्रवृत्तयोः ।
विशेषश्चेन्न दृश्येत विनयः स्यात् समस्तयोः ॥९
पूर्वमाक्षारयेद् यस्तु नियतं स्यात् स दोषभाक् ।
पश्चाद् यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः ॥१०
द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुनः ।
स तयोर्दण्डमाप्नोति पूर्वो वा यदि वेतरः ॥११
यमेव ह्यतिवर्तेरन्नेते सन्तं जनं नृषु ।
स एव विनयं कुर्यान्न तद्विनयभाङ् नृपः ॥१२
मला ह्येते मनुष्येषु धनमेषां मलात्मकम् ।
अतस्तान् घातयेद् राजा नार्थदण्डेन दण्डयेत् ॥१३

शतं ब्राह्मणमाक्रुश्य क्षत्रियो दण्डमर्हति।
वैश्योऽप्यर्धं शतं द्वे वा शूद्रस्तु वधमर्हति ॥१४

विप्रः पञ्चाशतं दण्ड्यः क्षत्रियस्याभिशंसने।
वैश्यं चैवार्धपञ्चाशच्छूद्रं द्वादशको दमः ॥१५

समवर्णद्विजादीनां द्वादशैव व्यतिक्रमे।
वादेष्ववचनीयेषु तदेव द्विगुणं भवेत् ॥१६

काणं वा यदि वा खञ्जमन्यं वापि तथाविधम्।
तथ्येनापि ब्रुवन् दाप्यो दण्डं कार्षापणात् परम् ॥१७

न किल्बिषेणापवदेच्छास्त्रतः कृतपावनम्।
न राज्ञा धृतदण्डं च दण्डयेत् तद्व्यतिक्रमे ॥१८

लोकेऽस्मिन् द्वाववक्तव्यावदण्ड्यौ च प्रकीर्तितौ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभृतो जगत् ॥१९

पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः।
वचनात् तुल्यदोषः स्यान्मिथ्या द्विर्दोषभाग् भवेत् ॥२०

नामजातिग्रहं तेषामभिद्रोहेण कुर्वतः।
निखेयोऽयोमयः शङ्कुः शूद्रस्याष्टादशाङ्गुलः ॥२१

धर्मोपदेशं दर्पेण द्विजानामस्य कुर्वतः।
तप्तमासेचयेत् तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥२२

येनाङ्गेनावरो वर्णो ब्राह्मणस्यापराध्नुयात्।
तदङ्गमेवच्छेत्तव्यमेवं शुद्धिमवाप्नुयात् ॥२३

सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः।
कटिदेशेऽङ्कय निर्वास्यः स्फिग्देशं वास्य कर्तयेत् ॥२४

अवनिष्ठीवतो दर्पाद् द्वावोष्ठौ छेदयेन्नृपः।
अवमूत्रयतः शिश्नमवशर्धयतो गुदम् ॥२५
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन्।
पादयोर्नासिकायां वा ग्रीवायां वृषणेषु च ॥२६
उपाक्रुश्य च राजानं वर्त्मनि स्वे व्यवस्थितम्।
जिह्वाच्छेदाद् भवेच्छुद्धिः सर्वस्वहरणेन वा ॥२७
राजनि प्रहरेद् यस्तु कृतागस्यपि दुर्मतिः।
शूले तमग्नौ विपचेद् ब्रह्महत्याशताधिकम् ॥२८
पुत्रापराधे न पिता न श्ववान् शुनि दण्डभाक्।
न मर्कटे च तत्स्वामी तैरेव प्रहितो न चेत् ॥२९

इति वाग्दण्डपारुष्यं पञ्चदशं (षोडशं) च विवादपदम् ॥

---

## अथ द्यूतसमाह्वयं सप्तदशं विवादपदम्।

अक्षवध्रशलाकाद्यैर्देवनं जिह्मकारितम्।
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम् ॥१
सभिकः कारयेद् द्यूतं दद्याद् देयं च तत्कृतम्।
दशकं तु शताद् वृद्धिस्तस्य स्याद् द्यूतकारिता ॥२
द्विरभ्यस्ताः पतन्त्यक्षा गेहे यस्याक्षदेविनः।
जयं तस्यापरस्याहुः कितवस्य पराजयम् ॥३

कितवेष्वेव तिष्ठेयुः कितवाः संशयं प्रति।
त एव तस्य द्रष्टारः स्युस्त एव च साक्षिणः ॥४
अशुद्धं कितवो नान्यमाश्रयेद् द्यूतमण्डलम्।
प्रतिहन्यान्न सभिको दापयन्तं स्वमित्रतः ॥५
कूटाक्षदेविनः पापान् निर्भजेद् द्यूतमण्डलात्।
कण्ठेऽक्षमालामासज्ज्य स ह्येषां विनयः स्मृतः ॥६

इति द्यूतसमाह्वयाख्यं सप्तदशं विवादपदम्॥

---

## अथ प्रकीर्णकमष्टादशं विवादपदम्।

प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणं तथा ॥१
पुरप्रधानसम्भेदः प्रकृतीनां तथैव च।
पाषण्डनैगमश्रेणिगणधर्मविपर्ययाः ॥२
पितृपुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः।
प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ॥३
वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा।
न दृष्टं यच्च पूर्वेषु तत्सर्वं स्यात् प्रकीर्णके ॥४
राजा त्ववहितः सर्वानाश्रमान् परिपालयेत्।
उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतैस्तथा ॥५

यो यो वर्णोऽपहीयेत यो वोद्रेकमनुव्रजेत् ।
तं तं दृष्ट्वा स्वतो मार्गात् प्रच्युतं स्थापयेत् पथि ॥६
अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु ।
प्रसमीक्ष्यात्मना राजा दण्डं दण्ड्येषु पातयेत् ॥७
श्रुतिस्मृतिविरुद्धं च जनानामहितं च यत् ।
न तत् प्रवर्तयेद् राजा प्रवृत्तं च निवर्तयेत् ॥८
न्यायापेतं यदन्येन राज्ञाज्ञानकृतं च यत् ।
तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् ॥९
राज्ञा प्रवर्तितान् धर्मान् यो नरो नानुपालयेत् ।
गर्ह्यः स पापो वध्यश्च लोपयन् राजशासनम् ॥१०
आयुधान्यायुधीयानां वाह्यादीन् वाह्यजीविनाम् ।
वेशस्त्रीणामलङ्कारान् वाद्यातोद्यानि तद्विदाम् ॥११
यच्च यस्योपकरणं येन जीवन्ति कारुकाः ।
सर्वस्वहरणेऽप्येतान् न राजा हर्तुमर्हति ॥१२
अनादिश्चाप्यनन्तश्च द्विपदां पृथिवीपतिः ।
दीप्तिमत्त्वाच्छुचित्वाच्च यदि स्यान्न पथश्च्युतः ॥१३
यदि राजा न सर्वेषां नियतं दण्डधारणम् ।
कुर्यात् पथो व्यपेतानां विनश्येयुरिमाः प्रजाः ॥१४
ब्राह्मण्यं ब्राह्मो हन्यात् क्षत्रियः क्षात्रमुत्सृजेत् ।
स्वकर्म जह्याद् वैश्यश्च शूद्रः सर्वान् विशेषयेत् ॥१५
राजान(चे? श्चे)न्नाभविष्यन् पृथिव्यां दण्डधारणे ।
शूले मत्स्यानिवापक्ष्यन् दुर्बलान् बलवत्तराः ॥१६

सतामनुग्रहो नित्यमसतां निग्रहस्तथा।
एष धर्मः स्मृतो राज्ञामर्थश्चापीडयन् प्रजाः॥१७
न लिप्यते यथा वह्निर्दहन्नश्चद्रिमाः प्रजाः।
तथा न लिप्यते राजा दण्डं दण्ड्येषु पातयन्॥१८
आज्ञा तेजः पार्थिवानां सा च वाचि प्रतिष्ठिता।
ते यद् ब्रूयुरसत् सद्वा स धर्मो व्यवहारिणाम्॥१९
राजा नाम चरत्येष भूमौ साक्षात् सहस्रदृक्।
न तस्याज्ञां व्यतिक्रम्य सन्तिष्ठेरन् प्रजाः क्वचित्॥२०
रक्षाधिकारादीशत्वाद् भूतानुग्रहदर्शनात्।
यदेव कुरुते राजा तत् प्रमाणमिति स्थितिः॥२१
विगुणोऽपि यथा स्त्रीणां पूज्य एव पतिः सदा।
प्रजानां विगुणोऽप्येवं पूज्य एव नराधिपः॥२२
तपःक्रीताः प्रजा राज्ञा प्रभुरासीत् ततो नृपः।
तस्मात् तद्वचसि स्थेयं वार्ता चासौ तदाश्रया॥२३
पञ्च रूपाणि राजानो धारयन्त्यमितौजसः।
अग्नेरिन्द्रस्य सोमस्य यमस्य धनदस्य च॥२४
कारणान्निर्निमित्तं वा यदा क्रोधवशं गतः।
प्रजा दहति भूपालस्तदाग्निरभिधीयते॥२५
यदा तेजः समालम्ब्य विजिगीषुरुदायुधः।
अभियाति परान् राजा तदेन्द्रः समुदाहृतः॥२६"
विगतक्रोधसन्तापो हृष्टरूपो यदा नृपः।
प्रजानां दर्शनं याति सोम इत्युच्यते तदा॥२७

धर्मासनगतः श्रीमान् दण्डं धत्ते यदा नृपः ।
समः सर्वेषु भूतेषु तदा वैवस्वतो यमः ॥२८
यदातिथिगुरुप्राज्ञान् भृत्यादीनवनीपतिः ।
अनुगृह्णाति दानेन तदा स धनदः स्मृतः ॥२९
तस्मात् तं नावजानीयान्नाक्रोशेन्न विशोषयेत् ।
आज्ञायां चास्य तिष्ठेत मृत्युः स्यात् तद्व्यतिक्रमे ॥३०
तस्य वृत्तिः प्रजारक्षा वृद्धप्राज्ञोपसेवनम् ।
दर्शनं व्यवहाराणामात्मनश्चाभिरक्षणम् ॥३१
ब्राह्मणानुपसेवेत नित्यं राजा समाहितः ।
संयुक्तं ब्राह्मणैः क्षत्रं मूलं लोकाभिरक्षणे ॥३२
ब्राह्मणस्यापरीहारोऽजघन्यासनमग्रतः ।
प्रथमं दर्शनं प्रातः सर्वेषां चाभिवादनम् ॥३३
अग्रं नवेभ्यः सस्येभ्यो मार्गदानं च गच्छतः ।
भैक्षहेतोः परागारे प्रवेशश्चानिवारितः ॥३४
समित्पुष्पोदकादानेष्वस्तेयं सपरिग्रहात् ।
अनाक्षेपः परेभ्यश्च सम्भाषश्च परस्त्रिया ॥३५
नदीष्ववेतनस्तारः पूर्वमुत्तरणं तथा ।
करेष्वशुल्कदानं च नचेद् वाणिज्यमस्य तत् ॥३६
वर्तमानोऽध्वनि श्रान्तो गृह्णन्नेकाशनः स्वयम् ।
ब्राह्मणो नापराध्नोति द्वाविक्षू पञ्च मूलिकान् ॥३७
नाभिशस्तान्न पतितान्न द्विषो न च नास्तिकात् ।
न सोपधान्नानिमित्तं न दातारं प्रपीड्य च ॥३८

अर्थानां भूरिभावाच्च देयत्वाच्च महात्मनाम्।
श्रेयान् प्रतिग्रहो राज्ञामन्येभ्यो ब्राह्मणादृते ॥३९
ब्राह्मणश्चैव राजा च द्वावप्येतौ धृतव्रतौ।
नैतयोरन्तरं किञ्चित् प्रजाधर्माभिरक्षणात् ॥४०
धर्मज्ञस्य कृतज्ञस्य रक्षार्थं शासतोऽशुचीन्।
मेध्यमेव धनं प्राहुस्तीक्ष्णस्यापि महीपतेः ॥४१
शुचीनामशुचीनां च सन्निपातो यथाम्भसाम्।
स तत्र समतां याति तद्वद् राज्ञां धनागमः ॥४२
यदा चाग्नौ स्थितं दीप्ते शुद्धिमाप्नोति काञ्चनम्।
एवमेवागमाः सर्वे शुद्धिमायान्ति राजसु ॥४३
यदा च कश्चित् स्वं द्रव्यं ब्राह्मणेभ्यः प्रयच्छति।
तद् राज्ञाप्यनुमन्तव्यमेष धर्मः सनातनः ॥४४
अन्यत्र कारादुचिताद् भूमेः षड्भागसंज्ञितात्।
बलिः स तस्य विहितः प्रजापालनवेतनः ॥४५
शक्यं तत् पुनरादातुं यद्‌ब्राह्मणसात्कृतम्।
ब्राह्मणाय तु यद् दत्तं न तस्याहरणं पुनः ॥४६
दानमध्ययनं यज्ञः कर्मास्योक्तं त्रिलक्षणम्।
याजनाध्यापने वृत्तिस्तृतीयस्तु प्रतिग्रहः ॥४७
स्वकर्मणि द्विजस्तिष्ठन् वृत्तिमाहारयेत् कृताम्।
नासङ्ख्यः प्रतिगृह्णीयाद् वर्णेभ्यो नियमे सति ॥४८
अशुचिर्वचनाद् यस्य शुचिर्भवति पूरुषः।
शुचिश्चैवाशुचिः सद्यः कथं राजा न दैवतम् ॥४९

विदुर्यस्यैव देवत्वं राज्ञो ह्यमिततेजसः ।
तस्य हि प्रतिगृह्णन्तो न लिप्यन्ते कदाचन ॥५०
लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥५१
एतानि सततं पश्येन्नमस्येदर्चयेच्च तान् ।
प्रदक्षिणं च कुर्वीत तथाह्यायुर्न हीयते ॥५२
द्विविधास्तस्करा ज्ञेयाः परद्रव्यापहारिणः ।
प्रकाशाश्चाप्रकाशाश्च तान् विद्यादात्मवान् नृपः ॥५३
प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः ।
उत्कोदकाः सोपधिकाः कितवाः पण्ययोषितः ॥५४
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशा लोकवञ्चकाः ॥५५
अप्रकाशास्तु विज्ञेया बहिरभ्यन्तराश्रिताः ।
सुप्तान् मत्तान् प्रमत्तांश्च मुष्णन्त्याक्रम्य चैव ये ॥५६
देशग्रामगृहघ्नाश्च पथिघ्ना ग्रन्थिमोचकाः ।
इत्येवमादयो ज्ञेया अप्रकाशास्तु तस्कराः ॥५७
तान् विदित्वा सुनिपुणैश्चोरैस्तत्कर्मकारिभिः ।
अनुसृत्य ग्रहीतव्या गूढैः प्रणिहितैर्नरैः ॥५८
सभाप्रपापूपशालावेशमद्यान्नविक्रयाः ।
चतुष्पथाश्चैत्यवृक्षाः समाजप्रेक्षणानि च ॥५९
शून्यागारारण्यरण्यानि देवतायतनानि च ।
चारैर्विचेयान्येतानि चौरग्रहणतत्परैः ॥६०

तथैवान्ये प्रणिहिताः श्रद्धेयाश्चित्रवादिनः।
चोरा ह्युत्साहयेयुस्तांस्तस्करा(न्) पूर्वतस्कराः ॥६१
अन्नपानसहादानैः समाजोत्सवदर्शनैः।
तथा चौर्यापदेशैश्च कुर्युस्तेषां प्रसर्पणम् ॥६२
ये तत्र नोपसर्पन्ति सृताः प्रणिहिता अपि।
तेऽभिसृत्य ग्रहीतव्याः सपुत्रपशुबान्धवाः ॥६३
अचोरा अपि दृश्यन्ते चोरैः सह समागताः।
यादृच्छिकान् नैव तु तान् राजा दण्डेन शासयेत् ॥६४
यांस्तत्र चोरान् गृह्णीयात् तानाताड्य निबध्य च।
अवघुष्य च सर्वत्र वध्याश्चित्रवधेन ते ॥६५
लोप्त्रादिरहिताश्चोरा राज्ञावध्या ह्यनागमम्।
सहोढान् सोपकरणांश्चोरान् क्षिप्रं विवासयेत् ॥६६
स्वदेशघातिनो ये स्युस्तथा मार्गोपरोधिनः।
तेषां सर्वस्वमादाय भूयो निन्दां प्रवर्तयेत् ॥६७
सहोढान् विमृशेच्चोरान् गृहीत्वा परिशङ्कया।
भयोपधाभिश्चित्राभिर्ब्रूयुः सत्यं यथा हि ते ॥६८
देशं कालं तथा जातिं नाम रूपं प्रतिश्रयम्।
कृत्यं कर्म सहायांश्च प्रष्टव्याः स्युर्निगृह्य ते ॥६९
वर्णस्वराकारभेदात् ससन्दिग्धनिवेदनात्।
अदेशकालदृष्टत्वाद् वासस्याप्यविशोधनात् ॥७०
असद्व्ययात् पूर्वचौर्यादसत्संसर्गकारणात्।
लेशैरप्यवगन्तव्या न होढेनैव केवलम् ॥७१

दस्युवृत्ते यदि नरे शङ्का स्यात् तस्करो न वा।
यदि स्पृश्येत लेशेन कार्यः स्याच्छपथं नरः ॥७२

चोराणां भक्तदा ये स्युस्तथाप्युदकदायकाः।
आवासदा देशिकदास्तथैवान्तरदायकाः ॥७३

क्रेतारश्चैव भाण्डानां प्रतिग्राहिण एव च।
समदण्डाः स्मृताः सर्वे ये च प्रच्छादयन्ति तान् ॥७४

राष्ट्रेषु राष्ट्राधिकृताः सामन्ताश्चैव चोदिताः।
अभ्याघातेषु विज्ञेया यथा चोरास्तथैव ते ॥७५

गोचरे यस्य मुषितं तेन चोरः प्रयत्नतः।
गृह्य दाप्योऽन्यथा मोषं पदं यदि न निर्गतम् ॥७६

निर्गते तु पदे तस्मान्नष्टेऽन्यत्र निपातिते।
सामन्तान् मार्गपालांश्च दिक्पालांश्चैव दापयेत् ॥७७

गृहे तु मुषिते राजा दापयेद् दण्डवासिकान्।
आरक्षिकान् बाहिकांश्च यदि चोरो न लभ्यते ॥७८

यदि वा दाप्यमानानां तस्मिन् मोषे ससंशये।
मुषितः शपथं कार्यो मो(षं ?)वैशोध्यकारणात् ॥७९

अचोरे दापिते मोषे चोरान्वेषणकारणात्।
उपलब्धे लभेरंस्ते द्विगुणं तत्र दापितात् ॥८०

चोरैर्हृतं प्रयत्नेन सरूपं प्रतिपादयेत्।
तदभावे तु मूल्यं स्याद् दण्डं दाप्यश्च तत्समम् ॥८१

काष्ठकाण्डतृणादीनां मृन्मयानां तथैव च।
शाकाहरितमूलानां हरणे फलपुष्पयोः ॥८२

गोरसेक्षुविकाराणां तथा लवणतैलयोः।
पक्वान्नानां कृतान्नानां मद्यानामामिषस्य च ॥८३

सर्वेषामल्पमूल्यानां मूल्यात् पञ्चगुणो दमः।
तुलाधारिममेयानां गणिमानां च सर्वशः ॥८४

एभ्यस्तूत्कृष्टमूल्यानां मूल्याद् दशगुणो दमः।
धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ॥८५

घृते त्वेकादशगुणं दण्डं दाप्योऽब्रवीन्मनुः।
हिरण्यरजतादीनामुत्तमानां च वाससाम् ॥८६

रत्नानां चैव मुख्यानां शतादभ्यधिके वधः।
पुरुषं हरतो वासो दण्डस्तूत्तमसाहसः ॥८७

सर्वस्वं स्त्रीं तु कन्यां तु हरतो वध एव च।
चतुर्विंशा(त् प ? व)रः पूर्वः परः षण्णवतिर्भवेत् ॥८८

शतानि पञ्च तु वरो मध्यमो द्विशतावरः।
सहस्रं तूत्तमो ज्ञेयः परः पञ्चशतावरः ॥८९

त्रिविधः साहसेष्वेवं दण्ड उक्तः स्वयम्भुवा।
प्रथमे ग्रन्थिभेदानामङ्गुल्यङ्गुष्ठयोर्वधः ॥९०

द्वितीये चैव यच्छेषं दण्डः पूर्वश्च साहसः।
गोषु ब्राह्मणसंस्थासु स्थूरायाश्छेदनं भवेत् ॥९१

दासीं तु हरतो नित्यमर्धपादावकर्तनम्।
येन येन यथाङ्गेन स्तेनो नृषु विचेष्टते।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥९२

गरीयसि गरीयांसमगरीयसि वा पुनः ।
स्तेने निपातयेद् दण्डं न यथा प्रथमे तथा ॥९३
दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् ।
त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो ब्रजेत् ॥९४
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।
चक्षुर्नासा च कर्णौ च स्तनौ देहस्तथैव च ॥९५
अपराधं परिज्ञाय देशकालौ च तत्त्वतः ।
सारानुबन्धावालोच्य दण्डं दण्ड्येषु पातयेत् ॥९६
न मित्रकारणाद् राज्ञो विपुलाद् वा धनागमात् ।
उत्स्रष्टव्याः साहसिकास्तस्करा लोकवञ्चकाः ॥९७
यावानवध्यस्य वधे तावान् वध्यस्य मोक्षणे ।
भवत्यधर्मो नृपतेर्धर्मस्तु विनियच्छतः ॥९८
न जातु ब्राह्मणं हन्यात् सर्वपापेष्वपि स्थितम् ।
निर्वासं कारयेत् कामं समग्रधनमक्षतम् ॥९९
सर्वं वापि हरेद् राजा चतुर्थं वावशेषयेत् ।
विप्रेभ्योऽनुस्मरन् धर्मं प्राजापत्यमिति स्थितिः ॥१००
ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते ।
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ॥१०१
गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदं कृत्वा शिखिपित्तेन पूरयेत् ॥१०२
विशिराः पुरुषः कार्यो ललाटे ब्रह्मघातिनः ।
असम्भाष्यश्च कर्तव्यस्तन्मनोरनुशासनम् ॥१०३

राजा स्तेनेन गन्तव्यो मुक्तकेशेन धीमता।
आचक्षाणेन तत् स्तेयमेवंकर्मास्मि शाधि माम् ॥१०४

अनेना भवति स्तेनः स्वकर्मप्रतिवेदनात्।
राजानं तत् स्पृशेदेन उत्सृजन्तं सकिल्बिषम् ॥१०५

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥१०६

शासनाद् वापि मोक्षाद् वा स्तेनो मुच्येत किल्बिषात्।
अशासत् तमसौ राजा स्तेनस्याप्नोति किल्बिषम् ॥१०७

गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम्।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥१०८

अष्टापाद्यं तु शूद्रस्य स्तेये भवति किल्बिषम्।
व्यष्टापाद्यं तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य तु ॥१०९

ब्राह्मणस्य चतुष्षष्टिं मनुः स्वायम्भुवोऽब्रवीत् ॥११०

शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः।
शारीरो द्विविधः प्रोक्तो ह्यर्थदण्डस्त्वनेकधा ॥१११

काकण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च।
शारीरस्त्ववरोधादिजीवितान्तस्तथा स्मृतः ॥११२

काकण्यादिस्तु यो दण्डः स तु माषपरः स्मृतः।
(कर्षा ? माषा)पराधों यः प्रोक्तः कर्षापणपरस्तु सः ॥११३

कार्षापणापरार्धस्तु चतुष्कार्षापणोत्तरः।
व्यवरोऽष्टपरश्चान्यस्त्र्यवरो द्वादशोत्तरः ॥११४

कार्षापणाद्या ये प्रोक्ताः सर्वे ते स्युश्चतुर्गुणाः ।
एवमन्येऽपि बोद्धव्याः प्राक् च ते पूर्वसाहसात् ॥११५
कार्षापणो दक्षिणस्यां दिशि रूढः प्रवर्तते ।
पणैर्निबद्धः पूर्वस्यां षोडशैव पणाः स तु ॥११६
पञ्चनद्याः प्रदेशे तु या संज्ञा व्यावहारिकी ।
कार्षापणप्रमाणं तु निबद्धमिह वै तया ॥११७
कार्षापणोऽधिका ज्ञेयश्चत(स्रो व ? स्रस्ता)स्तु धानकः ।
ते द्वादश सुवर्णं स्याद् दीना(रा ? र)श्चित्रकः स्मृतः ॥११८
वार्तां त्रयीमप्यथ दण्डनीतिं राजानुवर्तेत सदाप्रमत्तः ।
हन्यादुपायैर्विविधैर्गृहीत्वा पुरे च राष्ट्रे च विघुष्य चोरान् ॥

इति प्रकीर्णकमष्टादशं विवादपदम् ॥

—o❀o—

## अथ दिव्यप्रकरणम् ।

संशयस्थास्तु ये केचिन्महापातकिनश्च ये ।
अभिशस्ताः परैश्चापि ते शोध्याः संशयैरिह ॥१
घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमः ।
पञ्चैतान्याह दिव्यानि दूषितानां विशोधने ॥२
सन्दिग्धेऽर्थेऽभिशस्तानां परीक्षार्थं महात्मना ।
नारदेन पुरा प्रोक्ताः सत्यानृतविभाजिकाः ॥३

कारयेत चतुर्हस्तां समां लक्षणलक्षिताम् ।
तुलां काष्ठमयीं राजा शिक्यप्रान्तावलम्बिनीम् ॥४
दक्षिणोत्तरसंस्थानावुभावेकत्र सङ्गतौ ।
स्तम्भौ कृत्वा समे देशे तयोः संस्थापयेत् तुलाम् ॥५
आयसेन तु पाशेन मध्ये संगृह्य धर्मवित् ।
योजयेत सुसंयत्तां तुलां प्रागपरायताम् ॥६
वादिनोऽनुमतेनैनां कारयेन्नान्यथा नृपः ।
तोलयित्वान्तरं पूर्वं चिह्नं कृत्वा घटस्य तु ॥७
तुलितो यदि वर्धेत स विशुद्धो हि धर्मतः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥८
धर्मपर्यायवचनैर्धट इत्यभिधीयते ।
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ॥९
त्वमेव देव ! जानीषे न विदुर्यानि मानवाः ।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ॥१०
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ।
अतः परं प्रवक्ष्यामि लोहस्य विधिमुत्तमम् ।
द्वात्रिंशदङ्गुलाख्यं तु मण्डलान्मण्डलान्तरम् ॥११
मण्डलस्य प्रमाणं तु कुर्यात् तद्धटसम्मितम् ।
अष्टाभिर्मण्डलैरेवमङ्गुलानां शतद्वयम् ॥१२
चतुर्विंशत् समाख्यातं भूमेस्तु परिकल्पनम् ।
मण्डलैस्तु ततः क्लृप्तैः सोपवासः शुचिर्नरः ॥१३

सवासा जलमाप्लुत्य त्वार्द्रकेशः समाहितः ।
सप्ताश्वत्थस्य पत्राणि तथा सौत्राणि तन्तवः(?) ॥१४
हुताशतप्तं लोहस्य पञ्चाशत्पलिकं समम् ।
हस्ताभ्यां पिण्डमादाय व्रजेत् सप्त शनैः शनैः ॥१५
न मण्डलमतिक्रामेन्नाप्यर्वाक् स्थापयेत् पदम् ।
न पातयेत् तामप्राप्तो यावद् भूः परिकल्पिता ॥१६
भयात् पातयते यस्तु दग्धो वा न विभाव्यते ।
पुनस्तं हारयेल्लोहं स्थितिरेवं दृढीकृता ॥१७
तीर्त्वानेन विधानेन मण्डलानि कृतानि तु ।
न दग्धः सर्वथा यस्तु स विशुद्धो भवेदिह ॥१८
अनेन विधिना कार्यो हुताशसमयः सदा ।
त्वमेव सर्वभूतानामन्तश्चरसि नित्यशः ॥१९
प्रच्छन्नानि मनुष्याणां पापानि सुकृतानि च ।
त्वमेव देव ! जानिषे न विदुर्यानि मानवाः ॥२०
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति ।
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥२१
अतः परं प्रवक्ष्यामि पानीयविधिमुत्तमम् ।
नातिक्रूरेण धनुषा प्रेरयित्वा शरत्रयम् ॥२२
पानीये मज्जये(रं ? द् य) स्तु शङ्कायां प्रतिवर्तते ।
मध्यमस्तु शरो यः स्यात् पुरुषेण बलीयसा ॥२३
प्रत्यानीते तु तेनाथ तस्य शुद्धिर्भविष्यति ॥२४

स्त्रियस्तु न बलात्कार्या न पुमांसोऽतिदुर्बलाः।
भीरुत्वाद् योषितो मृत्युर्निरुत्साहतया कृशः॥२५
वारिमध्ये मनुष्यस्य (स्व) अङ्गं यदि न दृश्यते।
अतोऽन्यथा न शुद्धः स्यादेकाङ्गमपि दर्शयन् २६
स्थानादन्यत्र वा गच्छन् यस्मिन् पूर्वं निवेशितः।
तोयमध्ये मनुष्यस्य गृहीत्वोरुं सुसंयतः॥२७
लग्नस्तु निश्चलस्तिष्ठेद् यावत् प्राप्तस्तु सायकः।
(प्राप्तं तु सायकं दृष्ट्वा जलादुत्थाय प्राङ्मुखम् ?)।
आनीतं तु शरं दृष्ट्वा जलादुत्थाय प्राङ्मुखः।
प्रणिपत्य नृपं गच्छेत् सर्वांश्चैव सभासदः॥२८
त्वमम्भः! सर्वभूतानामन्तश्चरसि नित्यशः।
प्रच्छन्नानि मनुष्याणां पापानि सुकृतानि च॥२९
त्वमेव देव! जानीषे न विदुर्यानि मानवाः।
व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति॥३०
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि॥३१
अतःपरं प्रवक्ष्यामि विषस्य विधिमुत्तमम्।
अपराह्णे न मध्याह्ने न सन्ध्यायां तु धर्मवित्॥३२
शरद्ग्रीष्मवसन्तेषु वर्षासु च विवर्जयेत्।
भग्नं च वारितं चैव धूपितं मिश्रितं तथा।
कालकूटं मलं चैव विषं यत्नेन वर्जयेत्॥३३
शार्ङ्गं हैमवतं शस्तं रूपवर्णरसान्वितम्।
महादोषवते दद्याद् राजा तत्त्वबुभुत्सया॥३४

न वृद्धातुरबालेषु नच स्वल्पापराधिषु ॥३५
विषयस्य पलषड्भा(गं ? गो) भागो विंशतिम(स्यतत् ? स्तु यः)
तदष्टभागशुद्धं तु शो(ध्य ? ध्ये) दद्याद् घृताप्लुतम् ॥३६
यथोक्तेन विधानेन विद्वान् स्पृष्टांनुमोदितः ।
सोपवासस्तु खादेत देवब्राह्मणसन्निधौ ॥३७
विषवेगक्रमापेतं सुखेन यदि जीवति ।
विशुद्धमिति तं ज्ञात्वा राजा सत्कृत्य मोक्षयेत् ॥३८
अतःपरं प्रवक्ष्यामि कोशस्य विधिमुत्तमम् ।
मध्याह्ने सोपवासस्य स्नातस्यार्द्राम्बरस्य च ॥३९
न शूद्रस्याव्यसनिनः कोशपानं विधीयते ।
यद्भक्तः सोऽभियुक्तः स्यात् तद्दैवत्यं तु प्राङ्मुखः ॥४०
प्रत्युच्चार्य ततोर्ध्वास्यं पाययेत् प्रसृतित्रयम् ।
द्विसप्ताहान्तरात् तस्य त्रिसप्ताहेन वा शुभः ॥४१
प्रत्यात्मिकं तु दृश्येत सैव तस्य विभावना ।
ऊर्ध्वं त्रिसप्तदिवसाद् वैकृतं सुमहद् यदि ॥४२
नाभियोज्यः स विदुषा कृतकालव्यतिक्रमात् ।
महापराधे निर्दोषे कृतघ्ने क्लीबकुत्सिते ।
नास्तिकव्रात्यबालेषु कोशपानं विवर्जितम् ॥४३
चराचरस्य जगतो जलेश ! प्राणधारणम् ।
मानुषोऽयं त्वया देव ! धर्मतः शुद्धिमिच्छति ॥४४
अद्भ्यश्चाग्निरभूत् यस्मादतस्तोये विशेषतः ।
तस्मात् सत्येन भगवञ्जलेश त्रातुमर्हसि ॥४५

यथोक्तेन विधानेन पञ्च दिव्यानि धर्मवित् ।
दद्द् राजाभिशस्तेभ्यः प्रेत्य चेह च नन्दति ॥४६

इति पञ्च दिव्यानि ॥



समाप्तैषा नारदीयमनुस्मृतिः ॥



॥ अथ ॥

# अत्रिस्मृतिः

श्रीगणेशाय नमः ।

अज्ञानतिमिरान्धस्य वृतेनानेन केशव ।
प्रसीद सुमुखो नाथ ! ज्ञानदृष्टिप्रदो भव ॥१
हुताग्निहोत्रमासीन मत्रिं श्रुतवतां वरम् ।
उपगम्य च पृच्छन्ति ऋषयः शंसितव्रताः ॥२
भगवन् ! केन दानेन जपेन नियमेन च ।
शुध्यन्ते पातकैर्युक्ता स्तं ब्रवीषि महामुने ! ॥३
अपिख्यापितदोषाणां पापानां महतां तथा ।
सर्वेषां चोपपातानां शुद्धिं वक्ष्यामि तत्वतः ॥४
प्राणायामैः पवित्रैश्च दानैर्होमैर्जपै स्तथा ।
शुद्धिकामाः प्रमुच्यन्ते(पापेभ्यश्च द्विजर्षभाः)पावकेभ्यो न संशयः
प्राणायामान् पवित्रांश्च व्याहृतीः प्रणवन्तथा ।
पवित्रपाणिरासीनोऽभ्यस्य ब्रह्म नैत्यकम् ॥६
आवर्त्तयेत्सदायुक्तः (विप्रः) प्राणायामान् पुनः पुनः ।
आकेशाग्रादानखान्तात्तपस्तप्यत उत्तमम् ॥७
( त्वक्चर्ममासरुधिरमेदोमज्जास्थिभिः कृताः ।
तथेन्द्रियकृता दोषाः दह्यन्ते प्राणनिग्रहात् ॥ )

निरोधाज्जायते वायुर्वायोरग्निर्हि जायते।
तापेनापो हि जायन्ते ततोऽन्तः शुध्यते त्रिभिः ॥८
तथा चर्म तथानङ्गा दोषा अभ्यर्ति धर्मतः।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणनिग्रहात् ॥९
प्राणायामैर्दहेत् दोषाद्धारणाभिश्च किल्विषम्।
प्रत्याहारेण विषयान्ध्यानेनानैश्वरान् गुणान् ॥१०
न च तीव्रेण तपसा न स्वाध्यायैर्नचेज्यया।
मतिं(गतिं)गन्तुं सुराः(द्विजाः)शक्ता योगात्संप्राप्नुवन्तियाम्॥
योगात्सम्प्राप्यते ज्ञानं योगाद्धर्मस्य लक्षणम्।
योगः परं तपो नित्यं तस्माद्युक्तः सदा भवेत् ॥१२
प्रणवाद्या स्तथा वेदाः प्रणवे पर्यवस्थिताः।
वाङ्मयः प्रणवं सर्वं तस्मात्प्रणवमभ्यसेत् ॥१३
प्रणवे विनियुक्तस्य व्याहृतीषु च सप्तसु।
त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥१४
एकाक्षरं परं ब्रह्म प्राणायामः परं तपः।
ब्रह्माणी चैव गायत्री पावनं परमं ( त्रयम ) स्मृतम् ॥१५
समाहृतीकां (सव्याहृतिकां) सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदायतः प्राणः प्राणायामः स उच्यते ॥१६

इत्यात्रेयस्मृत्यां प्रथयोऽध्यायः॥

—:०:—

## ॥ अथ द्वितीयोऽध्यायः ॥

प्राणायामां (स्तु) स्तथा (यः) कुर्याद्यथाविधिरतन्द्रितः।
अहोरात्रिकृतात्पापात्तत्क्षणादेव शुध्यति ॥१
कर्म्मणा मनसा वाचा यदेनः कुरुते निशि।
अतिष्ठत् पूर्वसन्ध्यायां प्राणायामैस्तु शुध्यति ॥२
प्राणायामैर्य (स्वं) आत्मानं संयम्यास्ते पुनः पुनः।
दशद्वादशभिर्वापि चतुर्विंशात्परं तपः ॥३
कौत्सं जप्त्वाप इत्येतद्वासिष्ठं च तृचं प्रति।
कुष्माण्डं पावमानं च सुरापोऽपि विशुद्धति ॥४
सकृज्जप्त्वास्य पानीयं (वामीयं) शिवसङ्कल्पमेव च।
सुवर्णमपहृत्यापि क्षणाद्भवति निर्मलः ॥५
हविष्मांस्तु यमभ्यस्य न तमंह (भ) इतीव च।
सूक्तं तु पौरुषं जप्त्वा मुच्यते गुरुतल्पगः ॥६
सव्याहृतीकाः सप्रणवाः प्राणायामास्तु षोडश।
अपि भ्रूणहनं मासात् पुनन्त्यहरहः कृताः ॥७
अपि वाप्सु निमज्जन्वा त्रिः पठेदघमर्षणम्।
यथाश्वमेधः क्रतुराट् तादृशं मनुरब्रवीत् ॥८
आरम्भयज्ञः क्षत्रस्य हविर्यज्ञो विशामपि।
परिचर्ययज्ञः शूद्रस्तु जपयज्ञो द्विजोत्तमः ॥९
आरम्भयज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः।
उपांशु स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥१०

उपांशुस्तुचलज्जिह्वानांदशनच्छद ईरितः।
अधरोष्ठविभागो वा विश्वासोपांशुलक्षणः।
निर्विकारेण वक्त्रेण मनसा मानसः स्मृतः ॥११
सहस्रपरमां देवीं शतमध्यां दशावराम्।
गायत्रीं यः पठेद्विप्रो न स पापेन लिप्यते ॥१२
क्षत्रियो बाहुवीर्येण तरेदापदमात्मनः।
वित्तेन वैश्यशूद्रौ तु जपहोमैर्द्विजोत्तमः ॥१३
यथाश्वा रथहीनास्तु रथो वाश्वैर्यथा विना।
एवं तपोऽप्यविद्यस्य विद्या वाप्यतपस्विनः ॥१४
यथान्नं मधुसंयुक्तं मधु वान्येन संयुतम्।
एवं तपश्च विद्या च संयुक्तं भेषजं महत् ॥१५
विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपतत्परम्।
कुत्सितैरपि वर्त्तन्तमेनो न प्रतिपद्यते ॥१६

इति आत्रेयस्मृतौ द्वितीयोऽध्यायः।

---

यस्य (अथा) कार्यशतं साग्रं कृतं वेदश्च साध्यते।
सर्वं तत्तस्य (हिनस्ति) वेदाग्निर्दहत्यग्निरिवेन्धनम् ॥१
यथा जातबलो वाग्निर्दहत्यार्द्रानपि द्रुमान्।
तथा दहन्ति वेदज्ञाः कर्मजन्दोषमात्मनः ॥२
यथा महाह्रदे लोष्टं क्षिप्तं (अप्सु) सर्वं विनश्यति।
एवमात्मकृतं पापं त्रयी दहति देहिनः ॥३

न वेदबलमाश्रित्य पापकर्मरति(रतो)र्भवेत्।
अज्ञानाच्च प्रमादाच्च दह्यते कर्म नेतरत् ॥४

तपस्तपति योऽरण्ये मुनिर्मूलफलाशनः।
ऋचमेकाञ्च योऽधीते तच्च(तच्छ) तानि च तत्फलम् ॥५

वेदाभ्यासो (ऽन्वहं) यथाशक्त्या महायज्ञक्रियाक्षमाः।
नाशयन्त्याशु पापानि महापातकजान्यपि ॥६

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।
बिभेत्यल्पश्रुताद्वेदान्मामयं प्रतरिष्यति ॥७

याजनाध्यापनाद्दानात्तथैवाहुः प्रतिग्रहात्।
विप्रेषु न भवेद्दोषो ज्वलनार्कसमा (द्विजाः) हिते ॥८

शङ्कास्थाने समुत्पन्ने भक्ष्यभोज्यप्रतिग्रहे।
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु ॥९

सर्ववेदपवित्राणि वक्ष्याम्यहमतः परम्।
येषांजपैश्चहोमैश्च(शुध्यन्तिमलिनाजनाः)तिलकल्पश्चसंव्रता ॥१०

अघमर्षणं वेदवतं (देवव्रतं) शुद्धवत्यः शरत्समाः।
कुष्माण्डः पावमानश्च दुर्गा सावित्रिरेव च ॥११

शतरुद्रं (ऽथर्वशिरशं) धर्मशिरं त्रिसुपर्णं महाव्रतम्।
अनिषङ्गादयस्तोभासामानि व्याहृति स्तथा ॥१२
( अतिष्ठन् गाः पदस्तोमाः सामनि व्याहृतिस्तथा )

गारुडानि च सामानि गायत्रीं रैवतं तथा।
पुरुषव्रतञ्च भावञ्च तथा वेदकृतानि च ॥१३

अब्लिङ्गा वार्हस्पत्यं च वाक्सूक्तञ्चामृतं (व्रुवं) तथा।
गोसूक्तञ्चाश्वसूक्तञ्च इन्द्रशुद्धेश्च सामनि ॥१४

त्रीण्याज्यदोहानि रथन्तरञ्च-अग्नेर्व्रतं वामदेव्यं बृहच्च ।
एतानिजप्यानिपुनातिपापाज्जातिस्मरत्वंलभतेयदिच्छेत् ॥१५
अग्नेरपत्यं प्रथमं हिरण्यं भूर्वैष्णवी सूर्यसुताश्च गावः ।
लोकास्त्रयस्ते न भवन्तिदत्ताःयःकाञ्चनङ्गाञ्चमहीञ्चदद्यात्॥
सर्वेषामेव दानानामेकजन्मानुगं फलम ।
हाटकक्षितिधेनूनां सप्तजन्मानुगं फलम् ॥१७
सर्वकामफला वृक्षा नद्यः पायसकर्दमाः ।
काञ्चना यत्र प्रासादा स्तत्र गच्छन्ति गोप्रदाः ॥१८
वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् सप्त पञ्च वा ।
तिलक्षौद्रेण संयुक्तां स्तर्पयित्वा यथाविधि ॥१६
प्रीयतां धर्मराजेति (तद्वेश्मनिसवर्द्धते) यद्वा मनसि वर्त्तते ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥२०
सुवर्ण(णानि)नाभं यो दद्यात् सुमुखं कृत( मङ्गलम् )मार्गकम् ।
तिलैर्दद्यात्तस्य पुष्पफलं पुण्यं च यत् शृणु ॥२१
( तिलैर्दद्यात्तु यो भूमिं तस्य पुण्य फलं शृणु )
सा सुवर्णधरा धेनुः सशैलवनकानना ।
या तु सागरपर्यन्ता भवेद्दत्ता न संशयः ॥२२
तिलान् कृष्णाजिने कृत्वा सुवर्णमधुसर्पिषा ।
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥२३

इति—आत्रेयस्मृतौ तृतीयोऽध्यायः ॥

———

## अथ रहस्य प्रायश्चित्तानि व्याख्यास्यामः ॥

सामान्यस्त्रीगमनरहस्ये रहस्य प्रकाशे प्रकाशं पावनं अनुतिष्ठेत्। वा—समान्यमगम्यागमनन्दुरन्नभोजनान्तौ रहस्यौ रहस्यं प्रकाशं वावनमनुतिष्ठेत्। अथवाप्सुनिमज्यन् समन्दोऽयं त्रिरावृत्य (त्रिरात्र्यन्तरं) शुद्ध्येत्। गोवन्यवधे कन्यादूषणे इन्द्रशुद्ध्या इत्यापः पीत्वा मुच्यते।

वेदस्यैवगुणं वापि (जप्त्वा) सद्यः शोधनमुच्यते।
एकादशगुणान्वापि रुद्रानावर्त्य शुध्यति ॥१
महापातकोपपातकेभ्यो मलिनीकरणेभ्यो मुच्यते।
त्रि(द्वि)पदा नाम गायत्री वेदे वाजसनेयके ॥२
त्रिः कृत्वोऽन्तर्जले प्रोक्ता सर्वपापं व्यपोहति।
ब्राह्मणी गमने स्नात्वोदकुम्भान् ब्राह्मणाय दद्यात्
क्षत्रियावैश्यागमने तापसां त्रिरावृत्य शुद्ध्यति।
शूद्रागमने अघमर्षणं त्रिरावृत्य शुद्ध्यति।
गुरुदान् गत्वा वृषभ द्वादशावृत्या शुद्ध्यति।
अपेयं पीत्वा अघमर्षणेनापः पीत्वा विशुद्ध्यति।
अशक्तः प्रायश्चित्ते सर्वरात्रमनुशोच्य शुद्ध्येत।
अग्निसोम इन्द्रसोम इति जपित्वा कन्यादूषी विमुच्यते।
सोमं राजानमिति जपित्वा विषदा अग्निदाश्च विमुच्यन्ते।
सर्वेषामेव पापानां सङ्करे समुपस्थिते ॥३

दशसाहस्रमभ्यस्ता गायत्री शोधनी परा ।
ब्रह्महा गुरुतल्पी चाऽगम्या गामी तथैव च ॥४
स्वर्णस्तेयी च गोघ्नी च तथा विस्रम्भघातकः ।
शरणागतघाती च कूटसाक्षी त्वकार्य्यकृन् ॥५
एवमाद्येषु चान्येषु पापेष्वभिरतश्चिरम् ।
प्राणायामांस्तु यः कुर्यात् सूर्यस्योदयनं प्रति ॥६
सूर्यस्योदयनं प्राप्य निर्म्मला धौतकल्मषाः ।
भवन्ति भास्कराकारा विधूमा इव पावकाः ॥७
न हि ध्यानेन सदृशं पवित्रमिह विद्यते ।
श्वपाकेष्वपि भुञ्जानो ध्यानेनैवात्र लिप्यते ॥८
ध्यानमेव व(प)रो धर्मो ध्यानमेव परं तपः ।
ध्यानमेव परं शौचं तस्माद्ध्यानपरो भवेत् ॥९
सर्वपापप्रसक्तोऽपि ध्यानं नियतमभ्यसेत् ।
(ध्यायन् निमिष मुच्यते)
सर्वदा ध्यानयुक्तश्च तपस्वी पंक्तिपावनः ॥१०
पुनस्तपस्वी भवति पंक्तिपावनपावनः ।

इति आत्रेयस्मृतौ चतुर्थोऽध्यायः ।



चतुरस्रं ब्राह्मणस्य त्रिकोणं क्षत्रियस्य तु ।
वर्त्तुलञ्चैव वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ।
ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशन एव च ॥१
मण्डलान्युपजीवन्ति तस्मात् कुर्वन्ति मण्डलम् ।
यातुधानाः पिशाचाश्च क्रूराश्चैव तु राक्षसाः ॥२
हरन्ति रसमन्नस्य मण्डलेन विवर्जितम् ।
गोमयै र्मण्डलं कृत्वा भोक्तव्यमिति निश्चितम् ॥३
यत्र कपतितस्यान्नं भुक्त्वा चान्द्रायणं चरेत् ।
यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ॥४
तयोरन्नमदत्त्वा च भुक्त्वा चान्द्रायणं चरेत् ।
यतिहस्ते जलं दद्याद्भैक्षं दद्यात् पुनर्जलम् ॥५
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ।
वामहस्तेन यो भुङ्क्ते पयः पिबति वा द्विजः ॥६
सुरापानेन तत्तुल्यं मनुः स्वायम्भुवोऽब्रवीत् ।
हस्तदत्तास्तु ये स्नेहाल्लवणव्यञ्जनादि च ॥७
दातारं नोपतिष्ठन्ति भोक्ता भुञ्जीत किल्विषम् ।
अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ॥८
तथव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ।
ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् ॥९
उभावेतावभोज्यान्नौ भुक्त्वा चान्द्रायणं चरेत् ।
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥१०

वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम्।
शूद्रान्नेनोदरस्थेन योऽधिगच्छति मैथुनम्॥११
यस्यान्नं तस्यते पुत्रा अन्नाच्छुक्रं प्रवर्त्तते।
शूद्रान्नरसपुष्टाङ्गोऽधीयानोऽपि च नित्यशः॥१२
जुह्वत् चापि जपन्वापि गतिमूर्द्धान्न विन्दति।
यस्तु वेदमधीयानः शूद्रान्नमुपभुञ्जते॥१३
शूद्रो वेदफलं याति शूद्रत्वं चाधिगच्छति।
मृतसूतकपुष्टाङ्गो द्विजः शूद्रान्नभो(जीच)जनम्॥१४
अहमेवं न जानामि काङ्क्षां योनिङ्गमिष्यति।
श्वानस्तु सप्तजन्मानि नवजन्मानि शूकरः॥१५
गृध्रो द्वादश(अष्टादश)जन्मानि इत्येवं मनुरब्रवीत्।
परपाक मुपासन्ते ये द्विजा गृहमेधिनः॥१६
ते वै खरत्वमुष्ट्रत्वं श्वत्वञ्चैवाऽधिगच्छति।
श्राद्धं दत्वा च भुक्त्वा च मैथुवं योऽधिगच्छति॥१७
भवन्ति पितरस्तस्य तन्मासे रेतसोभुजः।
उच्छिष्टे न तु संस्पृष्टो द्रव्यहस्तः कथञ्चन॥१८
भूमौ निधाय तद्द्रव्यमाचान्तः शुचितामियात्।
स्पृशन्ति विन्दवः पादौ य आचामयतः परान्॥१९
भूमिगैस्ते समाज्ञेया न तैरप्रयतो भवेत्।
आचान्तोऽप्यशुचिस्तावद्यावत्पात्रमनुद्धृतम्॥२०
उद्धृतेप्यशुचिस्तावद्यावन्मण्डलशोधनम्।
आसने पादमारोप्य ब्राह्मणो यस्तु भुञ्जते॥२१

मुखेन वमितं चान्नं तुल्यं गोमांसभक्षणम्।
उपदंशान्नशेषं वा भोजने मुखनिःसृतम्॥२२
द्विजातीनामभोज्यान्नं भुक्त्वा चान्द्रायणं चरेत्।
पीतशेषन्तु यत्तोयं ब्राह्मणः पिबते पुनः॥२३
अपेयं तद्भवेदापः पीत्वा चान्द्रायणं चरेत्।
अनुवंशन्तु भुञ्जीत नानुवंशन्तु संविशेत्॥२४
अनुवंशन्तु भुञ्जानो दीर्घमायुरवाप्नुयात्।
आर्द्रपादस्तु भुञ्जीत नार्द्रपादस्तु संविशेत्॥२५
आर्द्रपादस्तु भुञ्जानो दीर्घमायुरवाप्नुयात्।
अनार्द्रपादः शयने दीर्घां श्रियमवाप्नुयात्॥२६
आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः।
श्रियं प्रत्यङ्मुखे भुङ्क्ते ऋतं भुङ्क्त उदङ्मुखः॥२७
शावे शवगृहं गत्वा श्मशाने वान्तरेऽपि वा।
आतुरं व्यञ्जनं कृत्वा दूरस्थोऽप्यशुचिर्भवेत्॥२८
अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्।
सम्बत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति॥२९
निर्देशं ज्ञातिमरणं श्रुत्वा पुत्रस्य जन्म च।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः॥३०
अशुद्धं स्वयमप्यन्नं न शुद्धस्तु यदि स्पृशेत्।
विशुध्यत्युपवासेन भुङ्क्ते कृच्छ्रेण स द्विजः॥३१
सूतके सूतकं स्पृष्ट्वा स्नानं शावे च सूतके।
सूतकेनैव शुद्धिः स्यान्मृतस्यान्निर्दशे शुचिः॥३२

सूतके सूतकं स्पृष्ट्वा स्नानं शावे च सूतके।
भुक्त्वा पीत्वा तदज्ञानादुपवासस्त्र्यहं भवेत्॥३३
मृण्मयानाञ्च पात्राणां दशाहे (दाहे) शुचिरिष्यते।
स्नानादिषु प्रयुक्तानां त्याग एव विधीयते॥३४
सूतके मृतके चैव मृतान्ते च प्रसूतके।
तस्मात्तु शङ्कताशौचे मृताशौचे न शुध्यति॥३५
सूतकाद्द्विगुणं शावं शावाद्द्विगुणमार्त्तवम्।
आर्त्तवाद् द्विगुणा सूतिस्ततोऽधिशवदाहकः॥३६
अनुगच्छेद्यथा (च्छया) प्रेतं ज्ञातिमज्ञातिमेव वा।
स्नात्वा सचैलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥३७
रजता शुध्यते नारी नदी वेगेन शुध्यति।
भस्मना शुध्यते कांस्यं पुनः पाकेन मृण्मयम्॥३८
नोदन्वतोऽम्भसि स्नानं क्षुरकर्म तथैव च।
अन्तर्वत्न्या (रती) पतिः कुर्वन्न प्रजा भवति ध्रुवम्॥३९
दम्पती शिशुना सार्द्धं सूतके दशमेऽहनि।
क्षौरं(स्नानं)कुर्यात्ततः पूता(पिता)दानभोजनयोग्यता॥४०
केशादि दूषिते तीरे न कुर्यात्तिलतर्पणम्।
जलमध्ये जलं देयं पितृणां जलमिच्छताम्।
घनस्थाने न दातव्यं पितृणां नोपगच्छति॥४१
रात्रिं कुर्यात् त्रिभागन्तु द्वौ भागौ पूर्व एव च।
उत्तरांशः प्रभातेन युज्यते मृत(ऋतु)सूतके॥४२
यदिपश्येद्दतुंपूर्वं क्रूरवारे मृतिः स्मृता।

इति पश्येत्तु भुक्त्वा तु पादुकारोहणं स्मृतम् ।
स्नात्वैन्द्रव्रतमादाय देवताभ्यो निवेदयेत् ॥४३

अपूपं लवणं मुद्गं गुडमिश्रं तथा हविः ।
दत्त्वा ब्राह्मणपत्नीभ्यो निशि भोजनमेव च ॥४४

चतुर्थेऽहनि कर्त्तव्यं क्षुरकर्मोति(ऋतुशान्तिश्च)यत्नतः ।
पुण्याहं वाचयित्वान्ते भोक्तव्यं (होतव्यं) शुद्धिमिच्छता ॥४५

अपुण्याहे तु भुञ्जीत विप्रो धर्ममजानतः ।
तस्य जातिमयं भुङ्क्ते प्रायश्चित्तं ध्रुवं भवेत् ॥४६

विवाहे वितते तन्त्रे होमकाल उपस्थिते ।
कन्यामृतुमतीं दृष्ट्वा कथं कुर्वन्ति याज्ञिकाः ॥४७

हविष्मत्या स्नापयित्वा त्वन्यवस्त्रमलङ्कृताम् ।
युञ्जानामाहुतिं कृत्वा ततः कर्म प्रवर्त्तते ॥४८

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातकी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥४९

आर्त्तवाभिप्लुतां नारीं चण्डालं पतितं शुनम् ।
भोज्यान्तरे ( तु संस्पृश्यन् ) प्रयुज्यन्ते
स्नात्वा मान स्तृचं (वाचस्पतिं) जपेत् ॥५०

आर्त्तवाभिप्लुतां नारीं दृष्ट्वा भुङ्क्ते(कामतः)ऽन्धकातराः ।
तदन्नं छर्दयित्वा तु कुशवारि पिबेदपः ॥५१

ये तां दत्वा (दृष्ट्वा) तु यो भुङ्क्ते प्राजापत्यं विशोधनम् ।
आर्त्तवाभिप्लुतां नारीं आर्त्तवाभिप्लुताभिधः ॥५२

भाषयित्वा तु संमोहादुपवासस्तयोर्भवेत् ।
उदक्यायाः करेणाथ भुक्त्वा चान्द्रायणं चरेत् ॥५३

प्राजापत्यमसत्याच्चेत् त्रिरात्रं स्पृष्टभोजने।
तद्धस्तभोजनञ्चैव त्रिगुणं सह भोजने ॥५४
चतुर्गुणं तदुच्छिष्टे पानीये त्वर्द्धमेव च।
उदक्यायाः समीपस्थ मन्नं भुक्त्वात्वकामतः ॥५५
उपवासेन शुद्धिः स्यात्पिवेद् ब्रह्म सुवर्चलम्।
आर्त्तवा यदि चाण्डालमुच्छिष्टेन तु पश्यति ॥५६
आस्नानकालं नाश्नीयादासीना वाग्यता बहिः।
पादकृच्छ्रन्तु यः कुर्याद् ब्रह्मकृच्छ्रं पिवेत् पुनः ॥५७
ब्राह्मणान् भोजयेत्पश्चाद्विप्राणा मनुशासनात्।
मृतसूतकसम्पर्के ऋतुं दृष्ट्वा कथं भवेत् ॥५८
आस्नानकालं नाश्नीयाद् भुक्त्वा चान्द्रायणं चरेत्।
आर्त्तवाभिप्लुता नारी चण्डालं स्पृशते यदि ॥५९
आर्त्तवाभिप्लुता नारीं आर्त्तवाभिप्लुता स्पृशेत्।
स्नात्वोपवासं कुर्याच्च पञ्चगव्येन शुध्यति ॥६०
कृच्छ्रमेकञ्चरेत्सा तु तदर्थं चान्तरीकृते।
आतुरा या ऋतुस्नाता स्नानकर्म कथं भवेत् ॥६१
स्नात्वा स्नात्वा पुनःस्पृश्य दशकृत्वस्त्वनातुराः।
वस्त्रापनयनं कृत्वा भस्मना परिमार्जयेत् ॥६२
दत्त्वा तु शक्तितो दानं पुण्याहेन विशुध्यति।
ब्रह्मणानां करैर्मुक्तं तोयं शिरसि धारयेत् ॥६३
सर्वतीर्थतटात्पुण्याद्विशिष्टतरमुच्यते।
रजस्वलायाः प्रेतायाः संस्कारं नाचरेद्द्विजः ॥६४

ऊर्ध्वं त्रिरात्रात्स्नातायाः शावधर्मेण दाहयेत् ।
रजस्वले च द्वे स्पृष्टे चातुर्वर्णस्य याः स्त्रियः ॥६५
अतिकृच्छ्रं चरेत्पूर्वं कृच्छ्रमेकं क्रमेण तु ।
रजस्वलायाः स्नातायाः पुनरेव रजस्वला ॥६६
विंशतेर्दिवसादूर्ध्वं त्रिरात्रमशुचिर्भवेत् ।
प्रसूतिका तु या नारी स्नानतो विंशतेः परम ॥६७
रजस्वला तु सा प्रोक्ता प्राक्तु नैमित्तिकं रजः ।
शुद्धा नारी शुद्धवासाः पुनरार्तवदर्शने ॥६८
वस्त्रं तु मलिनं त्यक्त्वा तिलमाप्लुत्य शुध्यति ।
आतुर स्नानसंप्राप्तौ दशकृत्वस्त्वनातुरः ॥६९
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्धो भविष्यति ।
चन्द्रसूर्यग्रहे नाद्यात् स्नात्वा मुक्ते तु भुञ्जते ॥७०
अमुक्तयो रस्तगयो रद्याद् दृष्ट्वा परेऽहनि ।
यस्य स्वजन्मनक्षत्रे गृह्येते शशिभास्करौ ॥७१
व्याधिः प्रवाहे मृत्युश्च दारिद्र्यश्च महद्भयम् ।
तस्माद्दानं च होमश्च देवताभ्यर्चनं जपम् ॥७२
कुर्यात्तस्मिन् दिने युक्ते तस्य शान्तिर्भविष्यति ।
सर्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥७३
यो नरः स्नाति तत्तीर्थे समुद्रे सेतुबन्धने ।
उपोष्य रजनो मेकां राहुग्रस्ते दिवाकरे ॥७४
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ।
सोमेऽप्येवं सूर्यतुल्यं तस्मात् सर्वं समाचरेत् ॥७५

इति आत्रेयस्मृतौ पञ्चमोऽध्यायः ॥

इष्ट्वा क्रतुशतैरेवं देवराजो महाद्युतिः ।
स्वर्गुरुं वाग्मिनां श्रेष्ठं पर्यपृच्छद्बृहस्पतिम् ॥१
भगवन्! केन दानेन स्वर्गतः सुखमेधते ।
यदक्षयं महाभाग! त्वं ब्रूहि वदताम्वर ॥२
एवं पृष्टः स इन्द्रेण देवदेवपुरोहितः ।
वाचस्पतिर्महातेजो बृहस्पति रुवाच ह ॥३
हिरण्यदानं गोदानं भूमिदानञ्च वासव ? ।
एतत्प्रयच्छमानोऽपि स्वर्गतः सुखमेधते ॥४
सुवर्णं रजतं वस्त्रं मणिरत्नं वसूनि च ।
सर्वमेव भवेद्दत्तं वसुधां यः प्रयच्छति ॥५
फलाकृष्टां महीं दद्यात् सवीजां सस्यमालिनीम् ।
यावत् सूर्यकरा लोके तावत् सर्गे महीयते ॥५

इति—आत्रेयस्मृतौ धर्मशास्त्रं सम्पूर्णम् ।

---

शुभमस्तु ।

॥ ॐ तत्सद्ब्रह्मणेनमः ॥

महर्ष्यात्रिप्रणीता ।

# अत्रि-संहिता ।

॥ श्रीगणेशाय नमः ॥

हुताग्निहोत्रमासीनमत्रिं वेदविदां वरम् ।
सर्वशास्त्रविधिज्ञातमृषिभिश्च नमस्कृतम् ॥१
नमस्कृत्य च ते सर्व इदं वचनमब्रूवन् ।
हितार्थं सर्व लोकानां भगवन्! कथयस्वनः ॥२

अत्रिरुवाच ।

वेदशास्त्रार्थतत्त्वज्ञा! यन्मे पृच्छथ संशयम् ।
तत् सर्वं संप्रवक्ष्यामि यथादृष्टं यथाश्रुतम् ॥३
सर्वतीर्थान्युपस्पृश्य सर्वान् देवान् प्रणम्य च ।
जप्त्वा तु सर्वसूक्तानि सर्वशास्त्रानुसारतः ॥४
सर्वपापहरं नित्यं सर्वसंशयनाशनम् ।
चतुर्णामपि वर्णानामत्रिः शास्त्रमकल्पयत् ॥५
ये च पापकृतो लोके ये चान्ये धर्मदूषकाः ।
सर्वैः पापैः प्रमुच्यन्ते श्रुत्वेदं शास्त्रमुत्तमम् ॥६

तस्मादिदं वेदविद्भिरध्येतव्यं प्रयत्नतः ।
शिष्येभ्यश्च प्रवक्तव्यं सद्वृत्तेभ्यश्च धर्मतः ॥७
अकुलीने ह्यसद्वृत्ते जडे शूद्रे शठे द्विजे ।
एतेष्वेव न दातव्यमिदं शास्त्रं द्विजोत्तमैः ॥८
एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत् ।
पृथिव्यां नास्ति तद्द्रव्यं यद्दत्त्वा ह्यनृणी भवेत् ॥९
एकाक्षरप्रदातारं यो गुरुं नाभिमन्यते ।
शुनां योनिशतं गत्वा चाण्डालेष्वपि जायते ॥१०
वेदं गृहीत्वा यः कश्चिच्छास्त्रञ्चैवावमन्यते ।
स सद्यः पशुतां याति सम्भवानेकविंशतिम् ॥११
स्वानि कर्माणि कुर्वाणा दूरे सन्तोऽपि मानवाः ।
प्रिया भवन्ति लोकस्य स्वे स्वे कर्मण्यवस्थिताः ॥१२
कर्म विप्रस्य यजनं दानमध्ययनं तपः ।
प्रतिग्रहोऽध्यापनञ्च याजनञ्चेति वृत्तयः ॥१३
क्षत्रियस्यापि यजनं दानमध्ययनं तपः ।
शस्त्रोपजीवनं भूतरक्षणंचेति वृत्तयः ॥१४
दानमध्ययनं वार्ता यजनं चेति वै विशः ।
शूद्रस्य वार्ता शुश्रूषा द्विजानां कारुकर्म च ॥१५
मयैष धर्मोऽभिहितः संस्थिता यत्र वर्णिनः ।
बहुमानमिह प्राप्य प्रयान्ति परमां गतिम् ॥१६
ये व्यपेताः स्वधर्मेभ्य परधर्मे व्यवस्थिताः ।
तेषां शास्तिकरो राजा स्वर्गलोके महीयते ॥१७

आत्मीये संस्थितो धर्मे शूद्रोऽपि स्वर्गमश्नुते।
परधर्मो भवेत्त्याज्यः सुरूपपरदारवत् ॥१८

बध्यो राज्ञा स वै शूद्रो जपहोमपरश्च यः।
ततो राष्ट्रस्य हन्ताऽसौ यथा वह्नेश्च वै जलम् ॥१९

प्रतिग्रहोऽध्यापनञ्च तथाऽविक्रेयविक्रयः।
याज्यं चतुर्भिरप्येतैः क्षत्त्रविट्पतनं स्मृतम् ॥२०

सद्यः पतति मांसेन लाक्षया लवणेन च।
त्र्यहेण शूद्रो भवति ब्राह्मणः क्षीरविक्रयात् ॥२१

अव्रताश्चानधीयाना यत्र भैक्षचराद्विजाः।
तं ग्रामं दण्डयेद्राजा चौरभक्तप्रदं बुधैः ॥२२

विद्वद्भोज्यमविद्वांसो येषु राष्ट्रेषु भुञ्जते।
तेऽप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् ॥२३

ब्राह्मणान् वेदविदुषः सर्वशास्त्रविशारदान्।
तत्र वर्षति पर्जन्यो यत्रैतान् पूजयेन्नृपः ॥२४

त्रयो लोकास्त्रयो वेदा आश्रमाश्च त्रयोऽग्नयः।
एतेषां रक्षणार्थाय संसृष्टा ब्राह्मणाः पुरा ॥२५

उभे सन्ध्ये समाधाय मौनं कुर्वन्ति ये द्विजाः।
दिव्यवर्षसहस्राणि स्वर्गलोके महीयते ॥२६

य एवं कुरुते राजा गुणदोषपरीक्षणम्।
यशः स्वर्गं नृपत्वञ्च पुनः कोषं समृद्धयेत् ॥२७

दुष्टस्य दण्डः सुजनस्य पूजा न्यायेन कोषस्य च संप्रवृद्धिः।
अपक्षपातोऽर्थिषु राष्ट्ररक्षाःपञ्चैव यज्ञाः कथिता नृपाणाम् ॥

यन् प्रजापालने पुण्यं प्राप्नुवन्तीह पार्थिवाः।
न तु क्रतुसहस्रेण प्राप्नुवन्ति द्विजोत्तमाः॥२६
अलाभे देवखातानां ह्रदेषु च सरःसु च।
उद्धृत्य चतुरः पिण्डान् पारके स्नानमाचरेत्॥३०
वसाशुक्रमसृङ्मज्जा मूत्रविट् कर्णविण्णखाः।
श्लेष्मास्थि दूषिकाः स्वेदो द्वादशैते नृणां मलाः॥३१
षण्णां षण्णां क्रमेणैव शुद्धिरुक्ता मनीषिभिः।
मृद्वारिभिश्च पूर्वेषामुत्तरेषान्तु वारिणा॥३२
शौचमङ्गलनायासाअनसूयाऽस्पृहा दमः।
लक्षणानि च विप्रस्य तथा दानं दयापि च॥३३
न गुणान् गुणिनोहन्ति स्तौति चान्यान् गुणानपि।
न हसेच्चान्नदोषांश्च सानसूया प्रकीर्तिता॥ ३४
अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिन्दितैः।
आचारेषु व्यवस्थानं शौचमित्यभिधीयते॥३५
प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम्।
एतद्धि मङ्गलं प्रोक्तमृषिभिर्धर्मदर्शिभिः॥३६
शरीरं पीड्यते येन शुभेन त्वशुभेन वा।
अत्यन्तं तन्न कुर्व्वीत अनायासः सउच्यते॥३७
यथोत्पन्नेन कर्त्तव्यं सन्तोषः सर्व्ववस्तुषु।
न स्पृहेत् परदारेषु साऽस्पृहा परिकीर्त्तिता॥३८
वाह्यमध्यात्मिकं वाऽपि दुःखमुत्पाद्यतेऽपरैः।
न कुप्यति न चाहन्ति दम इत्यभिधीयते॥३६

अहन्यहनि दातव्यमदीनेनान्तरात्मना।
स्तोकादपि प्रयत्नेन दानमित्यभिधीयते ॥४०
परस्मिन् बन्धुवर्गे वा मित्रे द्वेष्ये रिपौ तथा।
आत्मवद्वर्त्तितव्यं हि दयैषा परिकीर्त्तिता ॥४१
यश्चैतैर्लक्षणैर्युक्तो गृहस्थोऽपि भवेद्द्विजः।
स गच्छति परं स्थानं जायते नेह वै पुनः ॥४२
अग्निहोत्रं तपः सत्यं वेदानाञ्चैव पालनम्।
आतिथ्यं वैश्वदेवश्च इष्टमित्यभिधीयते ॥४३
वापीकूपतडागादि देवतायतनानि च।
अन्नप्रदानमारामाः पूर्त्तमित्यभिधीयते ॥४४
इष्टं पूर्त्तं प्रकर्त्तव्यं ब्राह्मणेन प्रयत्नतः।
इष्टेन लभते स्वर्गं पूर्त्तेन मोक्षमवाप्नुयात् ॥४५
इष्टापूर्त्तौ द्विजातीनां सामान्यौ धर्मसाधनौ।
अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके ॥४६
यमान् सेवेत सततं न नित्यं नियमान् बुधः।
यमान् पतत्यकुर्वाणो नियमान् केवलान् भजन् ॥४७
आनृशंस्यं क्षमा सत्यमहिंसा दानमार्जवम्।
प्रीतिः प्रसादो माधुर्य्यं मार्दवञ्च यमा दश ॥४८
शौचमिज्या तपोदानं स्वाध्यायोपस्थनिग्रहः।
व्रतमौनोपवासाश्च स्नानञ्च नियमा दश ॥४९
प्रतिकृतिं कुशमयीं तीर्थवारिषु मज्जयेत्।
यमुद्दिश्य निमज्जेत अष्टभागं लभेत सः ॥५०

मातरं पितरं वाऽपि भ्रातरं सुहृदं गुरुम्।
यमुद्दिश्य निमज्जेत द्वादशांशफलं लभेत्॥५१

अपुत्रेणैव कर्त्तव्यः पुत्रप्रतिनिधिः सदा।
पिण्डोदकक्रियाहेतोर्यस्मात्तस्मात् प्रयत्नतः॥५२

पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्।
ऋणमस्मिन् संनयति अमृतत्वञ्च गच्छति॥५३

जातमात्रेण पुत्रेण पितॄणामनृणी पिता।
तदह्नि शुद्धिमाप्नोति नरकात्त्रायते हि सः॥५४

जायन्ते बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजते चाश्वमेधञ्च नीलं वा वृषमुत्सृजेत्॥५५

काङ्क्षन्ति पितरः सर्वे नरकान्तरभीरवः।
गयां यास्यति यः पुत्रः स नस्त्राता भविष्यति॥५६

फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम्।
गयाशीर्षं पदाऽऽक्रम्य मुच्यते ब्रह्महत्यया॥५७

महानदीमुपस्पृश्य तर्पयेत् पितृदेवताः।
अक्षयान् लभते लोकान् कुलञ्चैव समुद्धरेत्॥५८

शङ्कास्थाने समुत्पन्ने भक्ष्यभोग (भोज्य) विवर्जिते।
आहारशुद्धिं वक्ष्यामि तन्मे निगदतः शृणु॥५९

अक्षारलवणं भैक्षं ( रौक्षं ) पिवेद्ब्राह्मीं सुवर्चसम।
त्रिरात्रं शङ्खपुष्पीम्वा ब्राह्मणः पयसा सह॥६०

मद्यभाण्डाद्द्विजः कश्चिदज्ञानात् पिबते जलम्।
प्रायश्चित्तं कथं तस्य मुच्यते केन कर्मणा॥६१

पलासविल्वपत्राणि कुशान् पद्मान्युदुम्बरम्।
काथयित्वा पिबेदापस्त्रिरात्रेणैव शुद्ध्यति ॥६२
सायं प्रातस्तु यः सन्ध्यां प्रमादाद्विक्रमेत् सकृत्।
गायत्र्यास्तु सहस्रं हि जपेत् स्नात्वा समाहितः ॥६३
शोकाक्रान्तोऽथवा श्रान्तः स्थितः स्नान(स्थान)जपाद्बहिः।
ब्रह्मकूर्चं चरेद्भक्त्या दानं दत्त्वा विशुद्ध्यति ॥६४
गवां शृङ्गोदके स्नात्वा महानद्युपसङ्गमे।
समुद्रदर्शनेनैव व्यालदष्टः शुचिर्भवेत् ॥६५
वृकश्वानशृगालैस्तु यदि दष्टश्च ब्राह्मणः।
हिरण्योदकसंमिश्रं घृतं प्राश्य विशुद्ध्यति ॥६६
ब्राह्मणी तु शुना दष्टा जम्बुकेन वृकेण वा।
उदितं ग्रहनक्षत्रं दृष्ट्वा सद्यः शुचिर्भवेत् ॥६७
सव्रतश्च शुना दष्टस्त्रिरात्रमुपवासयेत्।
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥६८
मोहात् प्रमादात् संलोभाद्व्रतभङ्गं तु कारयेत्।
त्रिरात्रेणैव शुद्ध्येत पुनरेव व्रती भवेत् ॥६९
ब्राह्मणान्नं यदुच्छिष्टमश्नात्यज्ञानतो द्विजः।
दिनद्वयं तु गायत्र्या जपं कृत्वा विशुद्ध्यति ॥७०
क्षत्रियान्नं यदुच्छिष्टमश्नात्यज्ञानतोद्विजः।
त्रिरात्रेण भवेच्छुद्धिर्यथा क्षत्रे तथा विशि ॥७१
अभोज्यान्नं यथा भुक्त्वा(तु भुक्तान्न)स्त्रीशूद्रोच्छिष्टमेव वा।
जग्ध्वा मांसमभक्ष्यन्तु सप्तरात्रं यवान् पिबेत् ॥७२

शुना चैव तु संस्पृष्टस्तस्य स्नानं विधीयते।
तदुच्छिष्टन्तु संप्राश्य षण्मासान् कृच्छ्रमाचरेत्॥७३
असंस्पृष्टेन संस्पृष्टः स्नानं तेन विधीयते।
तस्य चोच्छिष्टमश्नीयात् षण्मासान कृच्छ्रमाचरेत्॥७४
अज्ञानात् प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः॥७५
वपनं मेखला दण्डो भैक्षचर्यव्रतानि च।
निवर्त्तन्ते द्विजातीनां पुनः संस्कारकर्मणि॥७६
गृहशुद्धिं प्रवक्ष्यामि अन्तःस्थशवदूषिताम्।
प्रायोज्यं मृण्मयं भाण्डं सिद्धमन्नं तथैव च॥७७
गृहान्निष्क्रम्य तत्सर्वं गोमयेनोपलेपयेत्।
गोमयेनोपलिप्याथ छागेनाघ्रापयेत् पुनः॥७८
ब्राह्मैर्मन्त्रैस्तु पूतन्तु हिरण्यकुशवारिभिः।
तेनैवाभ्युक्ष्य तद्वेश्म शुद्धते नात्र संशयः॥७९
राज्ञान्यैः श्वपचैर्वापि बलाद्विचालितो द्विजः।
पुनः कुर्वीत संस्कारं पश्चात् कृच्छ्रत्रयञ्चरेत्॥८०
शुना चैव तु संस्पृष्टस्तस्य स्नानं विधीयते।
तदुच्चिष्टन्तु संप्राश्य यत्नेन कृच्छ्रमाचरेत्॥८१
अतः परं प्रवक्ष्यामि सूतकस्य विनिर्णयम्।
प्रायश्चित्तं पुनश्चैव कथयिष्याम्यतः परम्॥८२
एकाहाच्छुद्ध्यते विप्रो योऽग्निवेदसमन्वितः।
त्र्यहात् केवलवेदस्तु निर्गुणो दशभिर्दिनैः॥८३

व्रतिनः शास्त्रपूतस्य आहिताग्नेस्तथैव च।
राज्ञस्तु सूतकं नास्ति यस्य चेच्छति ब्राह्मणः ॥८४
ब्राह्मणो दशरात्रेण द्वादशाहेन भूमिपः।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥८५
सपिण्डानान्तु सर्वेषां गोत्रजः साप्तपौरुषः।
पिण्डाश्चोदक दानञ्च शावाशौचं तथाऽनुगम् ॥८६
चतुर्थे दशरात्रं स्यात् षडहः पञ्चमे तथा।
षष्ठे चैव त्रिरात्रं स्यात् सप्तमे त्र्यहमेव वा ॥८७
अष्टमे दिनमेकन्तु नवमे प्रहरद्वयम्।
दशमे स्नानमात्रेण सूतके तु शुचिर्भवेत् ॥८८
मृतसूतके तु दासीनां पत्नीनाञ्चानुलोमिनाम्।
स्वामितुल्यं भवेच्छौचं मृते स्वामिनि यौनिकम् ॥८९
शवस्पृष्टतृतीयस्तु सचेलः स्नानमाचरेत्।
चतुर्थे सप्तभैक्ष्यं स्यादेष शावविधिः स्मृतः ॥९०
एकत्र संस्कृतानान्तु मातृणामेकभोजिनाम्।
स्वामितुल्यं भवेच्छौचं विभक्तानां पृथक्पृथक् ॥९१
उष्ट्रीक्षीरमवीक्षीरं यच्चान्नं मृतसूतके।
पाचकान्नं नवश्राद्धं भुक्त्वा चान्द्रायणं चरेत् ॥९२
सूतकान्नमधर्माय यस्तु प्राश्नाति मानवः।
त्रिरात्रमुपवासः स्यादेकरात्रं जले वसेत् ॥९३
महायज्ञविधानन्तु न कुर्यान्मृतजन्मनि।
होमं तत्र प्रकुर्वीत शुष्कान्नेन फलेन वा ॥९४

बालस्त्वन्तर्दशाहेतु पञ्चत्वं यदि गच्छति।
सद्यएव विशुद्धिः स्यान्न प्रेतं नैव सूतकम् ॥९५
कृचूडस्तु कुर्वीत उदकं पिण्डमेव च।
स्वधाकारं प्रकुर्वीत नामोच्चारण मेव च ॥९६
ब्रह्मचारी यतिश्चैवं मन्त्रे पूर्वकृते तथा।
यज्ञे विवाहकाले च सद्यः शौचं विधीयते ॥९७
विवाहोत्सवयज्ञेष्वनन्तरामृतसूतके।
पूर्वसङ्कल्पितार्थस्य न दोषश्चात्रिरब्रवीत् ॥९८
मृतसंजननादूर्द्ध्वं सूतकादौ विधीयते।
स्पर्शनाचमनाच्छुद्धिः सूतिकाञ्चेन्न संस्पृशेत् ॥९९
पञ्चमेऽहनि विज्ञेयं संस्पर्शं क्षत्रियस्य तु।
सप्तमेऽहनि वैश्यस्य विज्ञेयं स्पर्शनं बुधैः ॥१००
दशमेऽहनि शूद्रस्य कर्त्तव्यं स्पर्शनं बुधैः।
मासेनैवात्मशुद्धिः स्या_ सूतके मृतके तथा ॥१०१
व्याधितस्य कदर्यस्य ऋणग्रस्तस्य सर्वदा।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥१०२
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।
स्वाध्यायव्रतहीनस्य सततं सूतकं भवेत् ॥१०३
द्वे कृच्छ्रे परिवित्तेस्तु कन्यायाः कृच्छ्रमेव च।
कृच्छ्रातिकृच्छ्रं मातुः स्याद्धेतुः सान्तपनं स्मृतम् ॥१०४
कुब्जवामनखञ्जेषु गर्हितेऽथ जडेषु च।
जात्यन्धबधिरे मूके न दोषः परिवेदने ॥१०५

क्लीवे देशान्तरस्थे च पतिते व्रजितेऽपि वा ।
योगशास्त्राभियुक्ते च न दोषः परिवेदने ॥१०६
पिता पितामहो यस्य अग्रजो वापि कस्यचित् ।
नाग्निहोत्राधिकारोऽस्ति न दोषः परिवेदने ॥१०७
भार्यामरणपक्षे वा देशान्तरगतेऽपि वा ।
अधिकारी भवेत् पुत्रस्तथा पातकसंयुते ॥१०८
ज्येष्ठो भ्राता यदा नष्टो नित्यं रोगसमन्वितः ।
अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा ॥१०६
नाग्नयः परिविन्दन्ति न वेदा न तपांसि च ।
न च श्राद्धं कनिष्ठो वै विना चैवाभ्यनुज्ञया ॥११०
तस्माद्धर्मं सदा कुर्याच्छ्रुतिस्मृत्युदितश्च यत् ।
नित्यं नैमित्तिकं काम्यं यच्च स्वर्गस्य साधनम् ॥१११
एकैकं वर्द्धयेन्नित्यं शुक्ले कृष्णे च ह्रासयेत् ।
अमावास्यां न भुञ्जीत एष चान्द्रायणोविधिः ॥११२
एकैकं ग्रासमश्नीयात्त्र्यहाणि त्रीणि पूर्ववत् ।
त्र्यहं परञ्च नाश्नीयादतिकृच्छ्रं तदुच्यते ॥११३
इत्येतत् कथितं पूर्वैर्महापातकनाशनम् ।
वेदाभ्यासरतं क्षान्तं महायज्ञक्रियापरम् ॥११४
न स्पृशन्तीह पापानि महापातकजान्यपि ।
वायुभक्षो दिवा तिष्ठेद्रात्रिञ्चैवाप्सु सूर्यदृक् ॥११५
जप्त्वा सहस्रं गायत्र्याः शुद्धिर्ब्रह्मवधादृते ।
पद्मोडुम्बरविल्वैश्च कुशाश्वत्थपलाशयोः ॥११६

एतेषामुदकं पीत्वा पर्णकृच्छ्रन्तदुच्यते।
पञ्चगव्यञ्च गोक्षीरदधिमूत्रशकृद्घृतम ॥११७
जग्ध्वा परेऽह्न्युपवसेदेष सान्तपनो विधिः।
पृथक्सान्तपनैर्द्रव्यैः षडहः सोपवासकः ॥११८
सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनं स्मृतम्।
त्र्यहं सायं त्र्यहं प्रातस्त्र्यहं भुङ्क्ते त्वयाचितम् ॥११९
त्र्यहं परञ्च नाश्नीयात् प्राजापत्योविधिः स्मृतः।
सायं तु द्वादश ग्रासाः प्रातः पञ्चदश स्मृताः ॥१२०
अयाचिते चतुर्विंशः परेऽह्न्यनशनं स्मृतम्।
कुक्कुटाण्डप्रमाणं स्याद्यावद्यस्य मुखं विशेत् ॥१२१
एतद्ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम्।
त्र्यहमुष्णं पिवेदापस्त्र्यहमुष्णं पिवेत् पयः ॥१२२
त्र्यहमुष्णं घृतं पीत्वा वायुभक्षो दिनत्रयम्।
षट्पलानि पिवेदापस्त्रिपलं तु पयः पिवेत् ॥१२३
पलमेकन्तु वै सर्पिस्तप्तकृच्छ्रं विधीयते।
दध्ना च त्रिदिनंभुङ्क्ते त्र्यहं भुङ्क्ते च सर्पिषा ॥१२४
क्षीरेण तु त्र्यहं भुङ्क्ते वायुभक्षो दिनत्रयम्।
त्रिपलं दधिक्षीरेण पलमेकं तु सर्पिषा ॥१२५
एतदेव व्रतं पुण्यं वैदिकं कृच्छ्रमुच्यते।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥१२६
उपवासेन चैकेन पादकृच्छ्रः प्रकीर्त्तितः।
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिम् ॥१२७

द्वादशाह्नोपवासेन पराकः परिकीर्त्तितः।
पिण्याकदधिशक्तूनां ग्रासश्च प्रतिवासरम् ॥१२८
एकैकमुपवासः स्यात् सौम्यकृच्छ्रः प्रकीर्त्तितः।
एषां त्रिरात्रमभ्यासादेकैकस्य यथाक्रमम् ॥१२६
तुलापुरुषइत्येष ज्ञेयः पञ्चदशाहिकः।
कपिलागोस्तु दुग्धाया धारोष्णं यत्पयः पिवेत् ॥१३०
एष व्यासकृतः कृच्छ्रः श्वपाकमपि शोधयेत्।
निशायां भोजनञ्चैव तज्ज्ञेयं नक्तमेव तु ॥१३१
अनादिष्टेषु पापेषु चान्द्रायण मथोदितम्।
अग्निष्टोमादिभिर्यज्ञैरिष्टैर्द्विगुणदक्षिणैः ॥१३२
यत्फलं समवाप्नोति तथा कृच्छ्रैस्तपोधनः।
वेदाभ्यासरतः क्षान्तो धर्मशास्त्राण्यवेक्षयेत् ॥१३३
शौचाचारसमायुक्तो गृहस्थोऽपि हि मुच्यते।
उक्तमेतद्द्विजातीनां महर्षे ! श्रूयतामिति ॥१३४
अतः परं प्रवक्ष्यामि स्त्रीशूद्रपतनानि च।
जपस्तपस्तीर्थयात्रा प्रव्रज्या मन्त्रसाधनम् ॥१३५
देवताराधनञ्चैव स्त्रीशूद्रपतनानि षट्।
जीवद्भर्त्तरि या नारी उपोष्य व्रतचारिणी ॥१३६
आयुष्यं हरते भर्त्तुः सा नारी नरकं व्रजेत्।
तीर्थस्नानार्थिनी नारी पतिपादोदकं पिवेत् ॥१३७
शङ्करस्यापि विष्णोर्वा प्रयाति परमं पदम्।
जीवद्भर्त्तरि वामाङ्गी मृते वापि सुदक्षिणे ॥१३८

श्राद्धे यज्ञे विवाहे च पत्नी दक्षिणतः सदा ।
सोमः शौचं ददौ तासां गन्धर्वाश्च तथाङ्गिराः ॥१३६
पावकः सर्वमेध्यं च मेध्यं वै योषितां सदा ।
जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ॥१४०
विद्यया याति विप्रत्वं श्रोत्रियस्त्रिभिरेव च ।
वेदशास्त्राण्यधीते यः शास्त्रार्थञ्च निषेवते ॥१४१
तदासौ वेदवित् प्रोक्तो वचनन्तस्य पावनम् ।
एकोऽपि वेदविद्धर्मं यं व्यवस्येद् द्विजोत्तमः ॥१४२
स ज्ञेयः परमो धर्मो नाज्ञानामयुतायुतैः ।
पावकाइव दीप्यन्ते जपहोमैर्द्विजोत्तमाः ॥१४३
प्रतिग्रहेण नश्यन्ति वारिणा इव पावकः ।
तान् प्रतिग्रहजान् दोषान् प्राणायामैर्द्विजोत्तमाः ॥१४४
उत्सादयन्ति विद्वांसो वायुर्मेघानिवाम्बरे ।
भुक्त्वाचम्य यदा विप्र आर्द्रपाणिस्तु तिष्ठति ॥१४५
लक्ष्मीर्बलं यशस्तेज आयुश्चैव प्रहीयते ।
यस्तु भोजनशालायामासनस्थ उपस्पृशेत् ॥१४६
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणञ्चरेत् ।
पात्रोपरिस्थितं पात्रं यः संस्थाप्य उपस्पृशेत् ॥१४७
तस्यान्नं नैव भोक्तव्यं भुक्त्वा चान्द्रायणञ्चरेत् ।
न देवास्तृप्तिमायान्ति दातुर्भवति निष्फलम् ॥१४८
हस्तं प्रक्ष्याल्य यस्त्वापः पिवेद्भुक्त्वा द्विजोत्तमः ।
तदन्नमसुरैर्भुक्तं निराशाः पितरो गताः ॥१४६

नास्ति वेदात् परं शास्त्रं नास्ति मातुः परो गुरुः।
नास्ति दानात् परं मित्रमिह लोके परत्र च ॥१५०
अपात्रे ह्यपि यद्दत्तं दहत्यासप्तमं कुलम्।
हव्यं देवा न गृह्णन्ति कव्यञ्च पितरस्तथा ॥१५१
आयसेन तु पात्रेण यदन्नमुपदीयते।
अन्नं विष्ठासमं भोक्तुर्दाता च नरकं व्रजेत् ॥१५२
इतरेण तु पात्रेण दीयमानं विचक्षणः।
न दद्याद्वामहस्तेन आयसेन कदाचन ॥१५३
मृण्मयेषु च पात्रेषु यः श्राद्धे भोजयेत् पितॄन्।
अन्नदाता च भोक्ता च तावेव नरकं व्रजेत् ॥१५४
अभावे मृण्मये दद्यादनुज्ञातस्तु तै द्विजैः।
तेषां वचः प्रमाणं स्याद्दतश्चानृतमेव च ॥१५५
सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च।
भिक्षादातु न धर्मोऽस्ति भिक्षुर्भुङ्क्ते तु किल्विषम् ॥१५६
न च कांस्येषु भुञ्जीयादापद्यपि कदाचन।
पलाशे यतयोऽश्नन्ति गृहस्थः कांस्यभाजने ॥१५७
कांस्यकस्य च यत्पापं गृहस्थस्य तथैव च।
कांस्यभोजी यतिश्चैव प्राप्नुयात् किल्विषं तयोः ॥१५८

अत्राप्युदाहरन्ति ॥

सौवर्णायसताम्रेषु कांस्यरौप्यमयेषु च।
भुञ्जन् भिक्षुर्न दूष्येत दूष्येच्चैव परिग्रहात् ॥१५९

यद्धिहस्ते जलं दद्याद्भिक्षां दद्यात् पुनर्जलम् ।
तद्भैक्षं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥१६०
चरेन्माधुकरीं वृत्तिमपि म्लेच्छकुलादपि ।
एकान्नं नैव भोक्तव्यं बृहस्पतिकुलादपि ॥१६१
अनापदि चरेद्यस्तु सिद्धं भैक्षं गृहे वसन् ।
दशरात्रं पिबेद्वज्रमापस्तु त्र्यहमेव च ॥१६२
गोमूत्रेण तु संमिश्रं यावकं घृतपाचितम् ।
एतद्वज्रमिति प्रोक्तं भगवानत्रिरब्रवीत् ॥१६३
ब्रह्मचारी यतिश्चैव विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥१६४
यक्ष्मासान् (षण्मासान्)कामयेन्मर्त्यो गर्भिणीमेव च स्त्रियम् ।
आ दन्तजननादूर्ध्वमेष धर्मो विधीयते ॥१६५
ब्रह्महा प्रथमश्चैव द्वितीयं गुरुतल्पगः ।
तृतीयन्तु सुरापोऽयं चतुर्थं स्तेयमुच्यते ॥१६६
(आपो गावस्तिलाभूमिर्गन्धो वा स्तेयते तथा ।)
पापानाञ्चैव संसर्गः पञ्चमं पातकं महत् ।
एषामेव विशुद्ध्यर्थं चरेद्वर्षा(कृच्छ्रा)ण्यनुक्रमात् ॥१६७
त्रीणि कृच्छ्राण्यकामश्चेद्ब्रह्महत्यां व्यपोहति ।
अर्द्धन्तु ब्रह्महत्यायाः क्षत्रियेषु विधीयते ॥१६८
षड्भागो द्वादशश्चैव विट्शूद्रयोस्तथा भवेत् ।
त्रीन् मासान्नक्तमश्नीयाद्भूमौ शयनमेव च ॥१६९
स्त्रीघातः शुद्ध्यतेऽप्येवं चरेत् कृच्छ्राब्दमेव च ।
रजकः शैलुषश्चैव वेणुकर्मोपजीवनः ॥१७०

एतेषां यस्तु भुङ्क्ते वै द्विजश्चान्द्रायणञ्चरेत् ।
सर्व्वान्त्यजानां गमने भोजने सम्प्रवेशने ॥१७१
पराकेण विशुद्धिः स्याद्भगवानत्रिरब्रवीत् ।
चाण्डालभाण्डे यत्तोयं पीत्वा चैव द्विजोत्तमः ॥१७२
गोमूत्रयावकाहारः सप्तत्रिंशदहान्यपि ।
संस्पृष्टं यस्तु पक्वान्नमन्त्यजैर्वाऽप्युदक्यया ॥१७३
अज्ञानाद्ब्राह्मणोऽश्नीयात् प्राजापत्यार्धमाचरेत् ।
चाण्डालान्नं यदा भुङ्क्ते चातुर्वर्णस्य निष्कृतिः ॥१७४
चान्द्रायणं चरेद्विप्रः क्षत्रः सान्तपनं चरेत् ।
षड्रात्रमाचरेद्वैश्यः पञ्चगव्यं तथैव च ॥१७५
त्रिरात्रमाचरेच्छूद्रो दानं दत्त्वा विशुद्ध्यति ।
ब्राह्मणो वृक्षमारूढश्चाण्डालो मूलसंस्पृशः ॥१७६
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ।
ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत् ॥१७७
नक्तभोजी भवेद्विप्रो घृतं प्राश्य विशुद्ध्यति ।
एकवृक्षसमारूढश्चाण्डालो ब्राह्मणस्तथा ॥१७८
फलान्यत्ति स्थितं तत्र प्रायश्चित्तं कथं भवेत् ।
ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत् ॥१७९
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ।
एकशाखासमारूढश्चाण्डालो ब्राह्मणो यदा ॥१८०
फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ।
त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥१८१

स्त्रियां म्लेच्छस्य सम्पर्काच्छुद्धिः सान्तपने तथा ।
तप्तकृच्छ्रं पुनः कृत्वा शुद्धिरेषाऽभिधीयते ॥१८२
सम्वर्त्तं यथा भार्यां गत्वा म्लेच्छस्य सङ्गताम् ।
सचैलं स्नानमादाय घृतस्य प्राशनेन च ॥१८३
स्नात्वा नद्युदकेश्चैव घृतं प्राश्य विशुद्ध्यति ।
संगृहीतामपत्यार्थमन्यैरपि तथा पुनः ॥१८४
चाण्डालम्लेच्छश्वपचकपालव्रतधारिणः ।
अकामतः स्त्रियो गत्वा पराकेण विशुद्ध्यति ॥१८५
कामतस्तु प्रसूतो वा तत्समो नात्र संशयः ।
स एव पुरुष स्तत्र गर्भो भूत्वा प्रजायते ॥१८६
तैलाभ्यक्तो घृताभ्यक्तो विण्मूत्रं कुरुते द्विजः ।
तैलाभ्यक्तो घृताभ्यक्तश्चाण्डालं स्पृशते द्विजः ॥१८७
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ।
केशकीटनखस्नायु अस्थिकण्टकमेव च ॥१८८
स्पृष्ट्वा नद्युदके स्नात्वा घृतं प्राश्य विशुद्ध्यति ।
मत्स्यास्थिजम्बुकास्थीनि नखशुक्तिकपर्दिकाः ॥१८९
स्पृष्ट्वा स्नात्वा हेमतप्तघृतं पीत्वा विशुद्ध्यति ।
गोकुले कन्दुशालायां तैलचक्रेक्षुचक्रयोः ॥१९०
अमीमांस्यानि शौचानि स्त्रीणाञ्च व्याधितस्य च ।
न स्त्री दूष्यति जारेण ब्राह्मणोऽवेदकर्मणा ॥१९१
नाऽऽपो मूत्रपुरीषाभ्यां नाग्निर्दहति कर्मणा ।
पूर्वं स्त्रियः सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः ॥१९२

भुञ्जते मानवाः पश्चान्न ता दुष्यन्ति कर्हिचित् ।
असवर्णैस्तु यो गर्भः स्त्रीणां योनौ निषिच्यते ॥१९३
अशुद्धा सा भवेन्नारी यावद्धर्मं (गर्भं) न मुञ्चति ।
विमुक्ते तु ततः शल्ये रजश्चापि प्रदृश्यते ॥१९४
तदा सा शुद्ध्यते नारी विमलं काञ्चनं यथा ।
स्वयं विप्रतिपन्ना या यदि वा विप्रतारिता ।१९५
वलान्नारी प्रभुक्ता वा चौरभुक्ता तथाऽपि वा ।
न त्याज्या दूषिता नारी न कामोऽस्या विधीयते॥ १९६
ऋतुकाल उपासीत पुष्पकालेन शुद्ध्यति ।
रजकश्चर्मकारश्च नटो वुरुड एव च ॥१९७
कैवर्तमेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ।
एषां गत्वा स्त्रियो मोहाद्भुक्त्वा च प्रतिगृह्य च ॥१९८
कृच्छ्राब्दमाचरेज्ज्ञानादज्ञानादैन्दवद्वयम् ।
सकृद्भुक्ता (क्तां) तु या नारी म्लेच्छैर्या पापकर्मभिः ॥१९९
प्राजापत्येन शुद्ध्येत ऋतुप्रसवणेन तु ।
वलाद्धृता स्वयं वाऽपि परप्रेरितया येदि ॥२००
सकृद्भुक्ता तु या नारीप्राजापत्येन (शुद्ध्यति) गृह्यति ।
प्रारब्धदीर्घतपसां नारीणां यद्रजो भवेत् ॥२०१
न तेन तद्व्रतं तासां विनश्यति कदाचन ।
मद्यसंस्पृष्टकुम्भेषु यत्तोयं पिवति द्विजः ॥२०२
कृच्छ्रपादेन शुद्ध्येत पुनः संस्कारमर्हति ।
अन्त्यजस्य तु ये वृक्षा बहुपुष्पफलोपगाः ॥२०३

उपभोग्यास्तु ते सर्वे पुष्पेषु च फलेषु च।
चाण्डालेन तु संस्पृष्टं यत्तोयं पिबति द्विजः ॥२०४
कृच्छ्रपादेन शुद्ध्येत आपस्तम्बोऽब्रवीन्मुनिः।
श्लेष्मोपानहविण्मूत्रस्त्रीरजोमद्यमेव च ॥२०५
एभिः सन्दूषिते कूपे तोयं पीत्वा कथं विधिः।
एकं द्व्यहं त्र्यहश्चैव द्विजातीनां विशोधनम् ॥२०६
प्रायश्चित्तं पुनश्चैव नक्तं शूद्रस्य दापयेत्।
सद्यो वान्ते सचैलं तु विप्रस्तु स्नानमाचरेत् ॥२०७
पर्युषिते त्वहोरात्रमतिरिक्ते दिनत्रयम्।
शिरःकण्ठोरुपादांश्च सुरया यस्तु लिप्यते ॥२०८
दशषट्त्रितथैकाहं चरेदेवमनुक्रमात्।

अत्राप्युदाहरन्ति ॥

प्रमादान्मद्यपः सुरां सकृत्पीत्वा द्विजत्तमः।
गोमूत्रयावकाहारो दशरात्रेण शुद्ध्यति ॥२०९
मद्यपस्य निषादस्य यस्तु भुङ्क्ते द्विजोत्तमः।
न देवा भुञ्जते तत्र न पिबन्ति हविर्जलम् ॥२१०
चितिभ्रष्टा तु या नारी ऋतु भ्रष्टा च व्याधितः।
प्राजापत्येन शुध्येत ब्राह्मणान् भोजयेद्दश ॥२११
ये च प्रव्रजिता विप्राः प्रव्रज्याग्निजलावहाः ॥२१२
अनाशकान्निवर्त्तन्ते चिकीर्षन्ति गृहस्थितिम्।
धारयेत्त्रीणि कृच्छ्राणि चान्द्रायणमथापि वा ॥२१३
जातकर्मादिकं प्रोक्तं पुनः संस्कारमर्हति।
नाशौचं नोदकं नाश्रु नापवादानुकम्पने ॥२१४

ब्रह्मदण्डहतानां तु न कार्यं कटधारणम् ।
स्नेहं कृत्वा भयादिभ्यो यस्त्वेतानि समाचरेत् ॥२१५
गोमूत्रयावकाहारः कृच्छ्रमेकं विशोधनम् ।
वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः ॥२१६
आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ।
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयम् ॥२१७
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ।
यस्यैकाऽपि गृहे नास्ति धेनुर्वत्सानुचारिणी ॥२१८
मङ्गलानि कुतस्तस्य कुतस्तस्य तमः क्षयः ।
अतिदोहातिवाहाभ्यां नासिकाभेदनेन वा ॥२१९
नदीपर्वतसंरोधे मृते पादोनमाचरेत् ।
अष्टागवं धर्महलं षड्गवं व्यावहारिकम् ॥२२०
चतुर्गवं नृशंसानां द्विगवं (वध्यते सह) गवबध्यकृत् ।
द्विगवं वाहयेत् पादं मध्याह्नं तु चतुर्गवम् ॥२२१
षड्गवं तु त्रिपादोक्तं पूर्णाहस्त्वष्टभिः स्मृतः ।
काष्ठलोष्ट्रशिलागोघ्नः कृच्छ्रं सान्तपनञ्चरेत् ॥२२२
प्राजापत्यं चरेन्मृत्सा (?) अतिकृच्छ्रन्तु आयसैः ।
प्रायश्चित्ते ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ॥२२३
अनुडुत्सहितां गाञ्च दद्याद्विप्राय दक्षिणाम् ।
शरभोष्ट्रहयान्नागान् सिंहशार्दूलगर्दभान् ॥२२४
हत्वा च शूद्रहत्यायाः प्रायश्चित्तं विधीयते ।
मार्जारगोधानकुलमण्डूकांश्च पतत्त्रिणः ॥२२५

हत्वा त्र्यहं पिबेत् क्षीरं कृच्छ्रं वा पादिकञ्चरेत् ।
चाण्डालस्य च संस्पृष्टं विण्मूत्रस्पृष्टमेव वा ॥२२६
त्रिरात्रेण विशुद्धिः स्याद्भुक्त्वोच्छिष्टं (समा) तथाचरेत् ।
वापीकूपतडागानां दूषितानाञ्च शोधनम् ॥२२७
उद्धरेद्धटशतं पूर्णं पञ्चगव्येन शुद्ध्यति ।
अस्थिचर्मावसिक्तेषु खरश्वानादिदूषिते ॥२२८
उद्धरेदुदकं सर्वं शोधनं परिमार्जनम् ॥२२९

गोदोहन चर्मपुटे च तोयं यन्त्राकरे कारुकशिल्पिहस्ते ।
स्त्रीबालवृद्धाचरितानि यान्यप्रत्यक्षदृष्टानि शुचीनि तानि ॥२३०
प्राकाररोधे विषमप्रदेशे सेनानिवेशे भवनस्य दाहे ।
आरब्धयज्ञेषु महोत्सवेषु तथैव दोषा न विकल्पनीयाः ॥२३१
प्रपास्वरण्ये भ्रढकस्य(घटकस्य)कूपे द्रोण्यां जलं कोशविनिर्गतञ्च ।
श्वपाकचण्डालपरिग्रहे तु पित्वा जलं पञ्चगव्येन शुद्धिः ॥२३२

रेतोविण्मूत्रसंस्पृष्टं कौपं यदि जलं पिबेत् ।
त्रिरात्रेणैव शुद्धिः स्यात् कुम्भे सान्तपनं तथा ॥२३३
छिन्नभिन्नशवं यत् स्यादज्ञानादुदकं पिबेत् ।
प्रायश्चित्तं चरेत् पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥२३४
उष्ट्रीक्षीरं खरीक्षीरं मानुषीक्षीरमेव च ।
प्रायश्चित्तं चरेत् पीत्वा तप्तकृच्छ्रं द्विजोत्तमः ॥२३५
वर्णवाह्येन संस्पृष्ट उच्छिष्टस्तु द्विजोत्तमः ।
पञ्चरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति ॥२३६

शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतम् ।
चर्मभाण्डैस्तु धाराभिस्तथा यन्त्रोद्धृतं जलम् ॥२३७
चण्डालेन तु संस्पृष्टः (ष्ट) स्नानमेव विधीयते ।
उच्छिष्टस्तु च संस्पृष्टस्त्रिरात्रेणैव शुद्ध्यति ॥२३८
आकराहृतवस्तूनि नाशुचीनि कदाचन ।
आकराः शुचयः सर्वे वर्जयित्वा सुराकरम् ॥२३९
भ्र(भृ)ष्टाभ्र(भृ)ष्टयवाश्चैव तथैव चणकाः स्मृताः ।
खर्जूरञ्चैव कर्पूरमन्यद्भ्र(भृ)ष्टतरं शुचि ॥२४०
अमीमांस्यानि शौचानि स्त्रीभिराचरितानि च ।
अदुष्टाः सततं धारा वातोद्धूताश्च रेणवः ॥२४१
बहूनामेव(क)· लग्नानामेकश्चेदशुचिर्भवेत् ।
अशौचमेकमात्रस्य नेतरेषां कथञ्चन ॥२४२
एकपङ्क्त्युपविष्टानां भोजनेषु पृथक् पृथक् ।
यद्येको लभते नीलीं सर्वे तेऽशुचयः स्मृताः ॥२४३
यस्य पटे पट्टसूत्रे नीलीरक्तो हि दृश्यते ।
त्रिरात्रं तस्य दातव्यं शेषाश्चैवोपवासिनः ॥२४४
आदित्येऽस्तमिते रात्रावस्पृश्यं स्पृशते यदि ।
भगवन् ! केन शुद्धिः स्यात्ततो ब्रूहि तपोधन ॥२४५
आदित्येऽस्तमिते रात्रौ स्पृशन् हीनं दिवा जलम् ।
तेनैव सर्व शुद्धिः स्याच्छवस्पृष्टन्तु वर्जयेत् ॥२४६
देशंकालं वयः शक्तिं पापञ्चावेक्षयेत्त(श्य यत्न)तः ।
प्रायश्चित्तं प्रकल्प्यं स्याद्यस्य चोक्ता न निष्कृतिः ॥२४७

देवयात्राविवाहेषु यज्ञप्रकरणेषु च।
उत्सवेषु च सर्वेषु स्पृष्टास्पृष्टिर्न विद्यते ॥२४८
आरनालं तथा क्षीरं कन्दुकं दधिसक्तवः।
स्नेहपक्वश्च तक्रश्च शूद्रास्यापि न दूष्यति ॥ २४६
आर्द्रमांसं घृतं तैलं स्नेहाश्च फलसम्भवाः।
अन्त्यभाण्डस्थिता एते निष्क्रान्ताः शुद्धिमाप्नुयुः ॥२५०
अज्ञानात् पिवते तोयं ब्राह्मणः शूद्रजातिषु।
अहोरात्रोषितः स्नात्वा पञ्चगव्येन शुद्ध्यति ॥२५१
आहिताग्निस्तु यो विप्रो महापातकवान् भवेत्।
अप्सु प्रक्षिप्य पात्राणि पश्चादग्निं विनिर्दिशेत् ॥ २५२
योऽगृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते।
अन्नं तस्य न भोक्तव्यं वृथापाको हि सः स्मृतः ॥२५३
वृथापाकस्य भुञ्जानः प्रायश्चित्तं चरेद्द्विजः।
प्राणानप्सु त्रिराचम्य घृतं प्राश्य विशुद्ध्यति ॥ २५४
वैदिके लौकिके वाऽपि हुतोच्छिष्टे जले क्षितौ।
वैश्वदेवं प्रकुर्वीत पञ्चसूनापनुत्तये ॥२५५
कनीयान गुणवान् श्रेष्ठः श्रेष्ठश्चेन्निर्गुणो भवेत्।
पूर्वं पाणिं गृहीत्वा च गृह्याग्निं धारयेद्बुधः ॥२५६
ज्येष्ठश्चेद्यदि निर्दोषो गृहीयादग्नि(यवीयकः)मग्रतः।
नित्यं नित्यं भवेत्तस्य ब्रह्महत्या न संशयः ॥२५७
महापातकसंस्पृष्टः (ष्टे) स्नानमेव विधीयते।
संस्पृष्टस्य यदा भुङ्क्ते स्नानमेव विधीयते ॥२५८

पतितैः सह संसर्गं मासार्द्धं मासमेव वा ।
गोमूत्रयावकाहारो मासार्धेन विशुध्यति ॥२५९
कृच्छ्राधं पतितस्यैव सकृद्भुक्त्वा द्विजोत्तमः ।
अविज्ञानाच्च तद्भुक्त्वा कृच्छ्रं सान्तपनञ्चरेत् ॥२६०
पतितान्नं यदा भुक्तं भुक्तं चाण्डालवेश्मनि ।
मासार्धन्तु पिवेद्वारि इति शातातपोऽब्रवीत् ॥२६१
गोब्राह्मणहतानाञ्च पतितानां तथैव च ।
अग्निना न च संस्कारः शङ्खस्य वचनं यथा ॥२६२
यश्चाण्डालीं द्विजो गच्छेत् कथञ्चित् काममोहितः ।
त्रिभिः कृच्छ्रैर्विशुध्येत प्राजापत्यानुपूर्वशः ॥२६३
पतिताच्चान्नमादाय भुक्त्वा वा ब्राह्मणो यदि ।
कृत्वा तस्य समुत्सर्गमतिकृच्छ्रं विनिर्दिशेत् ॥२६४
अन्त्यहस्ताच्छवे क्षिप्तं (प्त) काष्ठलोष्ट्रतृणानि च ।
न स्पृशेत्तु तथोच्छिष्टमहोरात्रं समाचरेत् ॥२६५
चाण्डालं पतितं म्लेच्छं मद्यभाण्डं रजस्वलाम् ।
द्विजः स्पृष्ट्वा न भुञ्जीत भुञ्जानो यदि संस्पृशेत् ॥२६६
अतः परं न भुञ्जीत त्यक्त्वाऽन्नं स्नानमाचरेत् ।
ब्राह्मणैः समनुज्ञात स्त्रिरात्रमुपवासयेत् ॥२६७
सघृतं यावकं प्राश्य व्रतशेषं समापयेत् ॥
भुञ्जानः संस्पृशेद्यस्तु वायसं कुक्कुटं तथा ।
त्रिरात्रेणैव शुद्धिः स्यादथोच्छिष्टस्त्वहेन तु ( ! ) ॥२६८

आरूढो नैष्ठिके धर्मे यस्तु प्रच्यवते पुनः ।
चान्द्रायणं चरेन्मासमिति शातातपोऽब्रवीत् ॥२६९
पशुवेश्याभिगमने प्राजापत्यं विधीयते ।
गवां गमने मनुप्रोक्तं व्रतं चान्द्रायणञ्चरेत् ॥२७०
अमानुषीषु गोवर्जमुदक्यायामयोनिषु ।
रेतः सिक्त्वा जले चैव कृच्छ्रं सान्तपनञ्चरेत् ॥२७१
उदक्यां सूतिकां वाऽपि अन्त्यजां स्पृशते यदि ।
त्रिरात्रेणैव शुद्धिः स्याद्विधिरेष पुरातनः ॥२७२
संसर्गं यदि गच्छेच्चेदुदक्याया तथाऽन्त्यजैः ।
प्रायश्चित्ती स विज्ञेयः पूर्वं स्नानं समाचरेत् ॥२७३
एकरात्रञ्चरेन्मूत्रं पुरीषं तु दिनत्रयम् ।
दिनत्रयं तथा पाने मैथुने पञ्च सप्त वा ॥२७४
भोजने तु प्रसक्तानां प्राजापत्यं विधीयते ।
दन्तकाष्ठे त्वहोरात्रमेष शौचविधिः स्मृतः ॥२७५
रजस्वला यदा स्पृष्टा श्वानचण्डालवायसैः ।
निराहारा भवेत्तावत् स्नात्वा कालेन शुद्ध्यति ॥२७६
रजस्वला यदा स्पृष्टा उष्ट्रजम्बुकशम्बरैः ।
पञ्चरात्रं निराहारा पञ्चगव्येन शुध्यति ॥२७७
स्पृष्टं (ष्टा) रजस्वलाऽन्योन्यं ब्राह्मण्या ब्राह्मणी च या ।
एकरात्रं निराहारा पञ्चगव्येन शुद्ध्यति ॥२७८
स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या क्षत्रियी च या ।
त्रिरात्रेण विशुद्धिः स्याद्व्यासस्य वचनं यथा ॥२७९

स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या वैश्यसम्भवा ।
चतूरात्रं निराहारा पञ्चगव्येन शुद्धयति ॥२८०
स्पृष्टा रजस्वलाऽन्योन्यं ब्राह्मण्या शूद्रसम्भवा ।
षड्रात्रेण विशुद्धिः स्याद्ब्राह्मणीकामकारतः ॥२८१
अकामतश्चरेदेवं ब्राह्मणी सर्वतः स्पृशेत् ॥
चतुर्णामपि वर्णानां शुद्धिरेषा प्रकीर्तिता ॥२८२
उच्छिष्टेन तु संस्पृष्टो ब्राह्मणो ब्राह्मणेन यः ।
भोजने मूत्रचारे च शङ्खस्य वचनं यथा ॥२८३
स्नानं ब्राह्मणसंस्पर्शे जपहोमौ तु क्षत्त्रिये ।
वैश्ये नक्तञ्च कुर्वीत शूद्रे चैव उपोषणम् ॥२८४
चर्मको रजको वैण्यो धीवरो नटकस्तथा ।
एतान् स्पृष्ट्वा द्विजो मोहादाचामेत् प्रयतोऽपिसन् ॥२८५
एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिवेत् ।
उच्छिष्टैस्तैस्त्रिरात्रं स्याद्घृतं प्राश्य विशुद्धयति ॥२८६
यस्तु छायां श्वपाकस्य ब्राह्मणस्त्वधिगच्छति ।
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुद्धयति ॥२८७
अभिशस्तो द्विजोऽरण्ये ब्रह्महत्याव्रतं चरेत् ।
मासोपवासं कुर्वीत चान्द्रायणमथापि वा ॥२८८
वृथा मिथ्योपयोगेन भ्रूणहत्याव्रतञ्चरेत् ।
अब्भक्षो द्वादशाहेन पराकेणैव शुद्धयति ॥२८९
शठश्च ब्राह्मणं हत्वा शूद्रहत्याव्रतं चरेत् ।
निर्गुणं सगुणो हत्वा पराकव्रतमाचरेत् ॥२९०

उपपातकसंयुक्तो मानवो म्रियते यदि।
तस्य संस्कारकर्ता च प्राजापत्यद्वयञ्चरेत् ॥२६१

अनुआतोऽतिसस्नेहं कदाचित् स्पृशते द्विजः।
त्रिरात्रमाचरेन्नक्तैर्निःस्नेहमथ वा चरेत् ॥२६२

विडालकाकाद्युच्छिष्टं जग्ध्वा श्वनकुलस्य च।
केशकीटावपन्नञ्च पिबेद्ब्राह्मीं सुवर्चसम् ॥२६३

उष्ट्रयानं समारुह्य खरयानञ्च कामतः।
स्नात्वाविप्रो(स्प-दिग्वासा)जितश्वासःप्राणायामेन शुद्ध्यति ॥

सव्याहृतीं सप्रणवां गायत्रीं शिरसा सह।
त्रिः पठेदा(वा)यतःप्राणः प्राणायामः स उच्यते ॥२६५

सकृद्द्विगुणगोमूत्रं सर्पिर्दद्याच्चतुर्गुणम्।
क्षीरमष्टगुणं देयं पञ्चगव्ये तथा दधि ॥२६६

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणस्तु सुरां पिबेत्।
उभौ तौ तुल्यदोषौ च वसतो नरके चिरं ॥२६७

अजा गावो महिष्यश्च अमेध्यं भक्षयन्ति याः।
दुग्धं हव्ये च कव्ये च गोमयं न विलेपयेत् ॥२६८

ऊनस्तनीमधिका वा या चान्या स्तनपायिनी।
तासां दुग्धं न होतव्यं हुतं चैवाहुतं भवेत् ॥२६६

ब्राह्मौदने च सोमे च सीमन्तोन्नयने तथा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत् ॥३००

राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम्।
स्वसुतान्नञ्च यो भुङ्क्ते स भुङ्क्ते पृथिवीमलम् ॥३०१

स्वसुता अप्रजा तावन्नाश्नीयात्तद्गृहे पिता ।
अन्नं भुङ्क्ते तु यो मोहात्पूयं स नरकं व्रजेत् ॥३०२
अधीत्य चतुरो वेदान् सर्वशास्त्रार्थतत्त्ववित् ।
नरेन्द्रभवने भुक्त्वा विष्ठायां जायते कृमिः ॥३०३
नवश्राद्धे त्रिपक्षे च षण्मासे मासिकेऽब्दिके ।
पतन्ति पितरस्तस्य यो भुङ्क्तेऽनापदि द्विजः ॥३०४
चान्द्रायणं नवश्राद्धे पराको मासिके तथा ।
त्रिपक्षे चैव कृच्छ्रः स्यात् षण्मासे कृच्छ्रमेव च ।
आब्दिके पादकृच्छ्रः स्यादेकाहः पुनराब्दिके ॥३०५
ब्रह्मचर्यमनाधाय मासश्राद्धेषु पर्वसु ।
द्वादशाहे त्रिपक्षेऽब्दे यस्तु भुङ्क्ते द्विजोत्तमः ॥३०६
पतन्ति पितरस्तस्य ब्रह्मलोके गता अपि ॥३०७
एकादशाहेऽहोरात्रं भुक्त्वा संचयने त्र्यहम् ।
उपोष्य विधिवद्विप्रः कुष्माण्डीं जुहुयाद्घृतम् ॥३०८
पक्षे वा यदि वा मासे यस्य नाश्नन्ति वै द्विजाः ।
भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणं चरेत् ॥३०९
यन्न वेदध्वनि(श्रान्तं)ध्वान्तं न च गोभिरलङ्कृतम् ।
यन्न बालैः परिवृतं श्मशानमिव तद्गृहम् ॥३१०
हास्येऽपि बहवो यत्र विनाधर्मं वदन्ति हि (न) ।
विनाऽपि धर्मशास्त्रेण स धर्मः पावनः स्मृतः ॥३११
हीनवर्णे च यः कुर्यादज्ञानादभिवादनम् ।
तत्र स्नानं प्रकुर्वीत घृतं प्राश्य विशुद्ध्यति ॥३१२

संक्षुत्पन्ने यदा स्नाने भुङ्क्ते वाऽपि पिबेद्यदि।
गायत्र्यष्टसहस्रं तु जपेत् स्नात्वा समाहितः ॥३१३
अङ्गुल्या दन्तकाष्ठं च प्रत्यक्षं लवणं तथा।
मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥३१४
दिवा कपित्थच्छायायां रात्री दधि शमीषु च।
कार्पासं दन्तकाष्ठं च विष्णोरपि हरेच्छ्रियम् ॥३१५
शूर्पवातनखाग्राम्बुस्नानं वस्त्रपदोदकं।
मार्जनीरेणुकेशाम्बु हन्ति पुण्यं दिवाकृतम् ॥३१६
मार्जनीरजकेशाम्बु देवतायतनोद्भवम्।
तेनावगुण्ठितं तेषु गङ्गाम्भःप्लुत एव सः ॥३१७
मृत्तिकाः सप्त न ग्राह्या वल्मीके मूषिकस्थले।
अन्तर्जले श्मशानान्ते वृक्षमूले सुरालये ॥३१८
वृषभैश्च तथोत्खाते श्रेयस्कामैः सदा बुधैः ॥३१९
शुचौ देशे तु संग्राह्या शर्कराश्मविवर्जिता ॥३२०
पुरीषे मैथुने होमे प्रस्रावे दन्तधावने।
स्नानभोजनजप्येषु सदा मौनं समाचरेत् ॥३२१
यस्तु संवत्सरं पूर्णं भुङ्क्ते मौनेन सर्वदा।
युगकोटिसहस्रेषु स्वर्गलोके महीयते ॥३२२
स्नानं दानं जपं होमं भोजनं देवतार्चनम्।
प्रौढपादो न कुर्वीत स्वाध्यायं पितृतर्पणम् ॥३२३
सर्वस्वमपि यो दद्यात् पातयित्वा द्विजोत्तमम्।
नाशयित्वा तु तत्सर्वं भ्रूणहत्याफलं लभेत् ॥३२४

ग्रहणोद्वाहसंक्रान्तौ स्त्रीणाञ्च प्रसवे तथा।
दानं नैमित्तिकं ज्ञेयं रात्रौ चापि प्रशस्यते ॥३२५
क्षौमजं वाऽथ कार्पासं पट्टसूत्रमथापि वा।
यज्ञोपवीतं यो दद्याद्वस्त्रदानफलं लभेत् ॥३२६
कांस्यस्य भाजनं दद्याद्घृतपूर्णं सुशोभनम्।
तथा भक्त्या विधानेन अग्निष्टोमफलं लभेत् ॥३२७
श्राद्धकाले तु यो दद्याच्छोभनौ (ने) च उपानहौ।
स गच्छत्यन्यमार्गेऽपि अश्वदानफलं लभेत् ॥३२८
तिलपात्रं तु यो दद्यात् संपूर्णं तु समाहितः।
स गच्छति ध्रुवं स्वर्गं नरो नास्त्यत्र संशयः ॥३२६
दुर्भिक्षे अन्नदाता च सुभिक्षे च हिरण्यदः।
पानीयदस्त्वरण्ये च स्वर्गलोके महीयते ॥३३०
यावदर्धप्रसूता गौस्तावत् सा पृथिवी स्मृता।
पृथिवीं तेन दत्त्वा स्यादीदृशीं गान्ददाति यः ॥३३१
तेनाग्नयो हुताः सम्यक् पितरस्तेन तर्पिताः।
देवाश्च पूजिताः सर्वे यो ददाति गवाह्निकम् ॥३३२
जन्मप्रभृति यत्पापं मातृकं पैतृकं तथा।
तत्सर्वं नश्यति क्षिप्रं वस्त्रदानान्न संशयः ॥३३३
कृष्णाजिनञ्च यो दद्यात् सर्वोपस्करसंयुतम्।
उद्धरेन्नरकस्थानात् कुलान्येकोत्तरं शतम् ॥३३४
आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः।
शूलपाणिस्तु भगवानभिनन्दन्ति भूमिदम् ॥३३५

वालुकानां कृता राशि यावत् सप्तर्षिमण्डलम् ।
गते वर्षशते चैव पलमेकं विशीर्यति ॥३३६
क्षयश्च दृश्यते तस्य कन्यादाने न चैव हि ।
आतुरे प्राणदाता च त्रीणि दानफलानि च (!) ॥३३७
सर्वेषामेव दानानां विद्यादानं ततोऽधिकम् ।
पुत्रादिस्वजने दद्याद्विप्राय च न कैतवे ॥३३८
सकामः स्वर्गमाप्नोति निष्कामो मोक्षमाप्नुयात् ।
ब्राह्मणे वेदविदुषि सर्वशास्त्रविशारदे ॥३३६
मातृ(ता)पितृपरे चैव ऋतुकालाभिगामिनि ।
शीलचारित्रसम्पूर्णे प्रातःस्नानपरायणे ॥३४०
तस्यैव दीयते दानं यदीच्छेच्छ्रेय आत्मनः ॥
संपूज्य विदुषो विप्रानन्येभ्योऽपि प्रदीयते ।
तत्कार्यं नैव कर्तव्यं न दृष्टं न श्रुतं मया ॥३४१
अतः परं प्रवक्ष्यामि श्राद्धकर्मणि ये द्विजाः ।
पितॄणामक्षयं दानं दत्तं येषान्तु निष्फलम् ॥३४२
न हीनाङ्गो न रोषी(गी) च श्रुतिस्मृति विवर्जितः ।
नित्यश्चानृतवादी च तांस्तु श्राद्धे न भोजयेत् ॥३४३
हिंसारतं च कपटं उपगूह्य श्रुतं च यः ।
किङ्करं कपिलं काणं श्वित्रिणं रोगिणं तथा ॥३४४
दुश्चर्माणं शीर्णकेशं पाण्डुरोगं जटाधरं ।
भारवाहकमुग्रञ्च द्विभार्यं वृषलीपतिम् ॥३४५

भेदकारी भवेन्नैव बहुपीडाकरोऽपि वा।
हीनातिरिक्तगात्रो वा तमप्यपनयेत्तथा ॥३४६
बहुभोक्ता दीनमुखो मत्सरी क्रूरबुद्धिमान्।
एतेषां नैव दातव्यः कदाचिद्वै प्रतिग्रहः ॥३४७
अथ चेन्मन्त्रविद्युक्तः शारीरैः पङ्क्तिदूषणैः।
अदूष्यं तं यमः प्राह पङ्क्तिपावन एव सः ॥३४८
श्रुतिः स्मृतिश्च विप्राणां नयने द्वे प्रकीर्तिते।
काणः स्यादेकहीनोऽपि द्वाभ्यामन्धः प्रकीर्तितः ॥३४९
न श्रुतिर्न स्मृतिर्यस्य न शीलं न कुलं यतः।
तस्य श्राद्धं न दातव्यं त्वन्धकस्यात्रिरब्रवीत् ॥३५०
तस्माद्वेदेन शास्त्रेण ब्राह्मण्यं ब्राह्मणस्य तु।
न चैकेनैव वेदेन भगवानत्रिरब्रवीत् ॥३५१
योगस्थैर्लोचनैर्युक्तः पादाग्रश्च प्रयच्छति।
लौकिकज्ञैश्च शास्त्रोक्तं पश्येच्चैवाधरोत्तरम् ॥३५२
वेदैश्च ऋषिभिर्गीतं दृष्टिमान् शास्त्रवेदवित् ॥३५३
व्रतिनं च कुलीनं च श्रुतिस्मृतिरतं सदा।
तादृशं भोजयेच्छ्राद्धे पितॄणामक्षयं भवेत् ॥३५४
यावतो ग्रसते ग्रासान् पितॄणां दीप्ततेजसाम्।
पिता पितामहश्चैव तथैव प्रपितामहः ॥३५५
नरकस्था विमुच्यन्ते ध्रुवं यान्ति त्रिविष्टपम्।
तस्माद्विप्रं परीक्षेत श्राद्धकाले प्रयत्नतः ॥३५६

न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः ।
इन्दुक्षये मासि मासि प्रायश्चित्ती भवेत्तु सः ॥३५७
सूर्य्ये कन्यागते कुर्याच्छ्राद्धं यो न गृहाश्रमी ।
धनं पुत्रान् कुलं तस्य पितृनिश्वासपीड़या ॥ ३५८
कन्यागते सवितरि पितरो यान्ति सत्सुतान् ।
शून्या प्रेतपुरी सर्व्वा यवाद्वृश्चिकदर्शनम् ॥३५९
ततो वृश्चिकसंप्राप्ते निराशाः पितरोगताः ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥३६०
पुत्रं वा भ्रातरं वापि दौहित्रं पौत्रकं तथा ।
पितृकार्ये प्रसक्ता ये ते यान्ति परमां गतिम् ॥३६१
यथा निर्मन्थनादग्निः सर्व्वकाष्ठेषु तिष्ठति ।
तथा स दृश्यते धर्म्याच्छ्राद्धदानान्न संशयः ॥२६२
सर्वशास्त्रार्थगमनं सर्वतीर्थावगाहनम् ।
सर्वयज्ञफलं विन्द्याच्छ्राद्धदानान्न संसयः ॥३६३
महापातकसंयुक्तो यो युक्तश्चोपपातकैः ।
घनैर्मुक्तो यथा भानूराहुमुक्तश्च चन्द्रमाः ॥३६४
सर्वपापविनिर्मुक्तः सर्वपापं विलङ्घयेत् ।
सर्वसौख्यं स्वयं प्राप्तः श्राद्धदानान्न संशयः ॥ ३६५
सर्वेषामेव दानानां श्राद्धदानं विशिष्यते ।
मेरुतुल्यं कृतं पापं श्राद्धदानं विशोधनम् ॥३६६
श्राद्धं कृत्वा तु मर्त्त्यो वै स्वर्गलोके महीयते ।
अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम ॥३६७

वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं भवेत्।
एतत् सर्वं मया ख्यातं श्राद्धकाले समुत्थिते ॥३६८
वैश्वदेवे च होमे च देवताभ्यर्च्चने जपे।
अमृतं तेन विप्रान्नमृग्यजुःसामसंस्कृतम् ॥३६९
व्यवहारनुपूर्वेण धर्मेण वलिभिर्जितम्।
क्षत्रियान्नं पयस्तेन घृतान्नं यज्ञपालने ॥३७०
देवो मुनिर्द्विजो राजा वैश्यः शूद्रो निषादकः।
पशुर्म्लेच्छोऽपि चाण्डालो विप्रा दशविधाः स्मृताः ॥३७१
सन्ध्यां स्नानं जपं होमं देवतानित्यपूजनम्।
अतिथिं वैश्वदेवञ्च देवब्राह्मण उच्यते ॥३७२
शाके पत्रे फले मूले वनवासे सदा रतः।
निरतोऽहरहः श्राद्धे स विप्रो मुनिरुच्यते ॥ ३७३
वेदान्तं पठते नित्यं सर्वसङ्गं परित्यजेत्।
साङ्ख्ययोगविचारस्थः स विप्रो द्विज उच्यते ॥३७४
अस्त्राहताश्च धन्वानः संग्रामे सर्वसंमुखे।
आरम्भे निर्जिता येन स विप्रः क्षत्र उच्यते ॥३७५
कृषिकर्मरतो यश्च गवाञ्च प्रतिपालकः।
वाणिज्यव्यवसायश्च स विप्रो वैश्य उच्यते ॥३७६
लाक्षालवणसंमिश्रं कुसुम्भं क्षीरसर्पिषः।
विक्रेता मधुमांसानां स विप्रः शूद्र उच्यते ॥३७७
चौरश्च तस्करश्चैव सूचको दंशकस्तथा।
मत्स्यमांसे सदालुब्धो विप्रो निषाद उच्यते ॥३७८

ब्रह्मतत्त्वं न जानाति ब्रह्मसूत्रेण गर्वितः।
तेनैव स च पापेन विप्रः पशुरुदाहृतः ॥३७९

वापीकूपतडागानामारामस्य सरःसु च।
निःशङ्कं रोधकश्चैव स विप्रो म्लेच्छ उच्यते ॥३८०

क्रियाहीनश्च मूर्खश्च सर्वधर्मविवर्जितः।
निर्दयः सर्वभूतेषु विप्रश्चाण्डालउच्यते ॥३८१

वेदैर्विहीनाश्च पठन्ति शास्त्रं शास्त्रेण हीनाश्च पुराणपाठाः।
पुराणहीनाः कृषिणो भवन्ति भ्रष्टास्ततो भागवता भवन्ति ॥३८२

ज्योतिर्विदो ह्यथर्वाणः कीराः पौराणपाठकाः।
श्राद्धे यज्ञे महादाने वरणीयाः कदाच न ॥३८३

श्राद्धञ्च पितरं घोरं दानं चैव तु निष्फलम्।
यज्ञे च फलहानिः स्यात्तस्मात्तान् परिवर्जयेत् ॥३८४

आविकश्चित्रकारश्च वैद्यो नक्षत्रपाठकः।
चतुर्विप्रा न पूज्यन्ते वृहस्पतिसमा यदि ॥३८५

मागधो माधु(थु)रश्चैव कापटः कीटकानजौ।
पञ्च विप्रा न पूज्यन्ते वृहस्पतिसमा यदि ॥३८६

क्रयक्रीता च या कन्या पत्नी सा न विधीयते।
तस्यां जाताः सुतास्तेषां पितृपिण्डं न विद्यते ॥३८७

अष्टशल्यागतो नीरं पाणिना पिवते द्विजः।
सुरापानेन तत्तुल्यं तुल्यं गोमांसभक्षणम् ॥३८८

ऊर्द्ध्वजङ्घेषु विप्रेषु प्रक्षाल्य चरणद्वयम्।
तावच्चाण्डालरूपेण यावद्गङ्गां न मज्जति ॥३८९

दीपशय्यासनच्छाया कार्पासं दन्तधावनम् ।
अजारेणुस्पर्शं चैव शक्रस्यापि श्रियं हरेत् ॥३६०
गृहाद्दशगुणं कूपं कूपाद्दशगुणं तटम् ।
तटाद्दशगुणं नद्यां गङ्गासंख्या न विद्यते ॥३६१
स्रवद्यद्ब्राह्मणं तोयं रहस्यं क्षत्रियं तथा ।
वापीकूपे तु वैश्यस्य शौद्रं भाण्डोदकं तथा ॥३६२
तीर्थस्नानं महादानं यच्चान्यत्तिलतर्पणम् ।
अब्दमेकं न कुर्वीत महागुरुनिपाततः ॥३६३
गङ्गा गया त्वमावस्या वृद्धिश्राद्धे क्षयेऽहनि ।
मघापिण्डप्रदानं स्यादन्यत्र परिवर्ज्जयेत् ॥ ३६४
घृतं वा यदि वा तैलं पयोवा यदि वा दधि ।
चत्वारो ह्याज्यसंस्थानं हुतं नैव तु वर्जयेत् ॥ ३६५
श्रुत्वैतानृषयो धर्मान् भाषितानत्रिणा स्वयम् ।
इदमूचुर्महात्मानं सर्वे ते धर्मनिष्ठिताः ॥३६६
य इदं धारयिष्यन्ति धर्मशास्त्रमतन्द्रिताः ।
इह लोके यशः प्राप्य ते यास्यन्ति त्रिपिष्टपम् ॥३६७
विद्यार्थी लभते विद्यां धनकामो धनानि च ।
आयुष्कामस्तथैवायुः श्रीकामो महतीं श्रियम् ॥३६८

इति श्रीमदत्रिमहर्षिसंहिता समाप्ता ।

---

॥ श्रीः ॥

# विष्णुस्मृतिः ।

श्रीगणेशायनमः ।

महामते ! महाप्राज्ञ ! सर्वशास्त्रविशारद ! ।
अक्षीणकर्म वन्धस्तु पुरुषो द्विजसत्तम ! ॥१
सततं किं जपन् जप्यं विवुधः किमनुस्मरन् ॥
मरणे यज्जपं जप्यं यञ्च भाव मनुस्मरन् ॥२
यच्चध्यात्वा द्विजश्रेष्ठ ! पुरुषो मृत्यु मागतः ।
परम्पद मवाप्नोति तन्मे वद महामुने: ॥३

शौनक उवाच ॥

इदमेव महाराज ! पृष्टवांस्ते पितामहः ।
भीष्मं धर्मभृतां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ॥४

युधिष्ठिर उवाच ॥

पितामह ! महाप्राज्ञ ! सर्वशास्त्र विंशारद ! ।
प्रयाणकाले यच्चिन्त्यं सूरिभि रतत्वचिन्तकैः ॥५

किन्नु स्मरन् कुरुश्रेष्ठ ! मरणे पर्युपस्थिते ।
प्राप्नुयात् परमां सिद्धिं श्रोतु मिच्छामि तद्वद ॥६

भीष्म उवाच ॥

अद्भुतं च हितं सूक्ष्मं उक्तं प्रश्नं त्वयानघ ! ।
शृणुष्वावहितो राजन् ! नारदेन पुरा श्रुतम् ॥७
श्रीवत्साङ्कं जगद्बीज मनन्तं लोकसाक्षिणम् ।
पुरा नारायणं देवं नारदः परिपृष्टवान् ॥८

नारद उवाच ॥

त्वमक्षरं परं ब्रह्म निर्गुणं तमसः परम् ।
आहुर्वेद्यं परं धाम ब्रह्मादि कमलोद्भवम् ॥९
भगवन् ! भूतभव्येश ! श्रद्दधानै जितेन्द्रियैः ।
कथं भक्तैर्विचिन्त्योऽसि योगिभिर्देहमोक्षिभिः ॥१०
किं च जप्यं जपेन्नित्यं कल्यमुत्थाय मानवाः ।
कथं युञ्जन् सदा ध्यायन् ब्रूहि तत्त्वं सनातनम् ॥११

भीष्म उवाच ॥

श्रुत्वा तस्य तु देवर्षेर्वाक्यं वाचस्पतिः स्वयम् ।
प्रोवाच भगवान् विष्णुर्नारदं वरदः प्रभुः ॥१२

श्रीभगवानुवाच ॥

हन्त ते कथयिष्यामि इमां दिव्यामनुस्मृतिम् ।
मरणे मामनुस्मृत्य प्राप्नोति परमां गतिम् ॥१३

यात्मवीत्य प्रयाणे तु मद्भावायोपपद्यते ।
ओङ्कार मग्रतः कृत्वा मां नमस्कृत्य नारद ॥१४
एकाग्रः प्रयतो भूत्वा इमं मन्त्र मुदीरयेत् ।
अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः ॥१५
पुमान् विमुच्यते सद्यः सिंहत्रस्तै मृगैरिव ।
ओमित्येव परं ब्रह्म शाश्वतं परमव्ययम ॥१६
एतदुच्चारयन्मर्त्यो ब्रह्मभूयाय कल्पते ।
ब्रह्मा विष्णुश्च रुद्रश्च सर्वमो मिति चोच्यते ॥१७
सम्पन्नेऽसुरसंयाने नम्यते च मुमुक्षुभिः ।
मोक्षश्च ज्ञानिनां प्रोक्तो मोहश्चाज्ञानिनां स्मृतः ॥१८
यस्य यादृग्विधो भाव स्तस्य तादृग्विधो हरिः ।
भवे भवनविश्वात्मा भूतानां हितकाम्यया ॥१९
सृजते आत्मनात्मान मात्मन्येव स्वमायया ।
हरिरेव सतां नित्यं शरण्यः शरणार्थिनाम् ॥२०
नहि नारायणादन्य स्त्रिषु लोकेषु विद्यते ।
वसत्यमृतमक्षय्यं यस्मिन् लोकाः ससागराः ॥२१
त एव सृजते लोकान् सृष्टिकाले जगत्प्रभुः ।
तेजांसि येन दिव्यन्ते महोत्पन्नेन तेजसा ॥२२
वासुदेवात्मकं सर्वं तत्तेजोऽपि हि नान्यथा ।
वासनाद्या स्तुः ये भावाः संभवन्ति युगे युगे ॥२३
लोकत्रयहितार्थाय स्वोपकाराय नो हरिः ।
यतश्चोत्पद्यते विश्वं यस्मिन्नेव प्रलिप्यते ॥२४

क्षराक्षरविसृष्टस्तु सोऽच्युतः पुरुषोत्तमः।
अव्यक्तं शाश्वतं देवं प्रभवं पुरुषोत्तमम् ॥२५
प्रपद्ये प्राञ्जलिर्विष्णु मक्षय्यं भक्तवत्सलम्।
पुराणं पुरुषं दिव्य मद्भुतं लोकपावनम् ॥२६
प्रपद्ये पुण्डरीकाक्षं देवं नारायणं हरिम्।
लोकनाथं सहस्राक्ष मक्षरं परमं पदम् ॥२७
भगवन्तं प्रपन्नोऽस्मि भूतभव्यप्रभुंविभुम्।
स्रष्टारं सर्वलोकाना मनन्तं विश्वतोमुखं ॥२८
पद्मनाभं हृषीकेशं प्रपद्ये सत्यमच्युतम्।
हिरण्यगर्भ ममृतं भूगर्भं परतः परम् ॥२९
प्रभुंविभुमनाद्यन्तं प्रपद्ये तं रविप्रभम्।
सहस्रशीर्षं पुरुषं महर्षिं सत्यभावनम् ॥३०
प्रपद्ये सूक्ष्ममचलं वरेण्यमभयप्रदम्।
नारायणं पुराणेशं योगात्मानं सनातनम् ॥३१
संज्ञानां सर्वसत्वानां प्रपद्ये ध्रुवमीश्वरम्।
यः प्रभुः सर्वलोकानां येन सर्वमिदं ततम् ॥३२
चराचरगुरुर्देवः स मे विष्णुः प्रसीदतु।
यस्मादुत्पद्यते ब्रह्मा पद्मयोनिः पितामहः ॥३३
ब्रह्मयोनिर्हि विश्वस्य स मे विष्णुः प्रसीदतु।
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभि रेवच ॥३४
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु।
पर्जन्यः पृथिवी सस्यं कालो धर्मः क्रियाक्रिये ॥३५

गुणाकरः स मे विष्णुर्वासुदेवः प्रसीदतु ।
अग्निसोमार्कताराणां ब्रह्मरुद्रेन्द्रयोगिनां ॥३६
यस्तेजयति तेजांसि स मे विष्णुः प्रसीदतु ।
कार्यं क्रिया च करणं कर्त्ता हेतुः प्रयोजनम् ॥३७
अक्रिया करणी कार्यं स मे विष्णुः प्रसीदतु ।
शमीगर्भस्य यो गर्भस्तस्य गर्भस्य यो रिपुः ॥३८
रिपुगर्भस्य यो गर्भः स मे विष्णुः प्रसीदतु ।
अवलो येन बालेन कंसमल्लो महाबलः ॥३९
चाणूरो निहतो रङ्गे स मे विष्णुः प्रसीदतु ।
शङ्खः करवरे यस्य स मे विष्णुः प्रसीदतु ॥४०
येन क्रान्तास्त्रयो लोका दानवाश्च वशीकृताः ।
शरणं सर्वभूतानां स मे विष्णुः प्रसीदतु ॥४१
योगावास ! नमस्तुभ्यं सर्वावास ! वरप्रद ।
सर्वादि वासनाद्यादि वासुदेव ! प्रधानकृत् ॥४२
यज्ञगर्भ ! हिरण्याङ्ग ! पञ्चयज्ञ ! नमोऽस्तुते ।
चतुर्मूर्त्तिः परन्धाम लक्ष्मानन्दवरार्चित ॥ ४३
अजस्त्वमगमः पन्था ह्यमूर्त्तिविश्वमूर्त्तिधृक् ।
श्रीकर्तः ! पञ्चकालज्ञ ! नमस्ते ज्ञानसागर ॥४४
अव्यक्ताद्व्यक्तमुत्पन्नमव्यक्ताद्यः परोऽक्षरः ।
यस्मात्परतरन्नास्ति तमस्मि शरणं गतः ॥४५
न प्रधानो नच महान् पुरुषश्चेतनोह्यजः ।
अनयोग्यः परतरस्तमस्मि शरणं गतः ॥४६

चिन्तयन्तोऽपि यन्नित्यं ब्रह्मेशानादयः प्रभुम्।
निश्चयं नाधिगच्छन्ति तमस्मि शरणं गतः ॥४७
जितेन्द्रिया जितात्मानो ज्ञानध्यानपरायणाः।
यं प्राप्य न निवर्त्तन्ते तमस्मि शरणं गतः ॥४८
एकांशेन जगत् कृत्स्नमवष्टभ्य विभुः स्थितः।
अग्राह्यो निर्गुणो नित्यस्तमस्मि शरणं गतः ॥४९
सोमार्काग्निगतन्तेजो या च तारामयी द्युतिः।
दिवि संजायते यो यः स महात्मा प्रसीदतु ॥५०
सूर्यमध्यस्थितः सोमस्तस्य मध्ये च यास्तिता।
भूतबाह्याचरा दीप्तिः स महात्मा प्रसीदतु ॥५१
सगुणे निर्गुणश्चासौ लक्ष्मीवान् चेतनो ह्यजः।
सूक्ष्मः सर्वगतो देही स महात्मा प्रसीदतु ॥५२
साङ्ख्ययोगाश्च ये चान्ये सिद्धाश्च परमर्षयः।
यं विदित्वा विमुच्यन्ते स महात्मा प्रसीदतु ॥५३
अव्यक्तः समधिष्ठाता ह्यचिन्त्यः सदसत्परः।
आस्थितः प्रकृतिं भुङ्क्ते स महात्मा प्रसीदतु ॥५४
क्षेत्रज्ञः पञ्चधा भुङ्क्ते प्रकृतिं पञ्चभिर्मुखैः।
निर्विकार! नमस्तेऽस्तु साक्षिक्षेत्रिष्ववस्थितः ॥५५
अतीन्द्रिय! नमस्तुभ्यं लिङ्गैर्व्यक्तैर्न मीयसे।
येच त्वां नाभिजानन्ति संसारे सञ्चरन्ति ते ॥५६
कामक्रोधविनिर्मुक्ता भक्तास्त्वां प्रविशन्ति च।
अव्यक्तमत्यहङ्कारा मनोभूतेन्द्रियाणि च ॥५७

त्वयि तानि चलेषु त्वं नतेषु त्वं नते त्वयि।
एकत्वान्यत्वनानात्वं ये विदुर्यान्ति ते परम् ॥५८
समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
समत्वमभिकाङ्क्षन्ति मद्भक्तया वै नान्यचेतसः ॥५९
चराचरमिदं सर्वं भूतग्रामश्चतुर्विधम्।
त्वया त्वय्येव तत्प्रोतं सूत्रे मणिगणाइव ॥६०
स्रष्टो! भोक्तासि कूटस्थो ह्यतत्वस्तत्वसंज्ञितः।
अकर्ता हेतुरचरः पृथगात्मन्यवस्थितः ॥६१
न मे भूतेषु संयोगो न भूतत्वगुणाधिकः।
अहङ्कारेण बुद्ध्या वा न मे योगास्त्रिभिर्गुणैः ॥६२
न मे धर्मो ह्यधर्मो वा नामभोनन्नवा पुनः।
जरामरणमोक्षार्थं त्वां प्रपन्नोस्मि सर्वगः ॥६३
विषयैरिन्द्रियैर्वापि न मे भूयः समागतः।
ईश्वरोऽसि जगन्नाथ! किमतः परमुच्यते ॥६४
भक्तानां यद्धितं देव! तद्देहि त्रिदशेश्वर!
पृथिवीं यातु मे घ्राणं यातु मे रसनञ्जलम् ॥६५
रूपं हुताशनं यातु स्पर्शो यातु च मारुतम्।
श्रोत्रमाकाशमप्येतु मनो वैकारिकं पुनः ॥६६
इन्द्रियाणि गुणान्यातु स्वासु स्वासु च योनिषु।
पृथिवी यातु सलिलमापोऽग्निं मनलोऽनिलम् ॥६७
वायुराकाशमप्येतु मनश्चाकाशमेव च।
अहङ्कारं मनो यातु मोहनं सर्वदेहिनाम् ॥६८

अहङ्कारस्तथा बुद्धिं बुद्धिरव्यक्तमेव च ।
प्रधाने प्रकृतिं याते गुणसाम्ये व्यवस्थिते ॥६९
वियोगः सर्वकरणैर्गुणैर्भूतैश्च मेऽभवत् ।
सत्वं रजस्तमश्चैव प्रकृतिं प्रविशन्तु मे ॥७०
निष्कैवल्यं पदं देवकांक्षितं परमन्तपः ।
एकीभावस्त्वया मेऽस्तु न मे जन्म भवेत्पुनः ॥७१
नमो भगवते तस्मै विष्णवे प्रभविष्णवे ।
त्वद्बुद्धिस्तद्गतप्राणस्त्वद्भक्तस्त्वत्परायणः ॥७२
त्वामेवाहं स्मरिष्यामि मरणे पर्युपस्थिते ।
पूर्वदेहिकृता ये मे व्याधयः प्रविशन्तु माम् ॥७३
आर्दयन्तु च 'दुःखानि ऋणं मे न भवेदिति ।
उपदिष्टन्तु मे सर्वे व्याधयः पूर्वचिन्तिताः ॥७४
अनृणो गन्तुमिच्छामि तद्विष्णोः परमम्पदम् ।
अहं भगवतस्तस्य मम वासः सनातनः ॥७५
तस्याहं न प्रणश्यामि सच मे न प्रणश्यति ।
कर्मेन्द्रियाणि संयम्य पञ्च बुद्धीन्द्रियाणि च ॥७६
दशेन्द्रियाणि मनसो ह्यहङ्कारेण वा पुनः ।
अहङ्कारं तथा बुद्धौ बुद्धिमात्मनि योजयेत् ॥७७
आत्मबुद्धीन्द्रियम्पश्येद्बुद्धौ बुद्धेः परायणम् ।
ममायमपि तस्याहं येन सर्वमिदन्ततम् ॥७८
आत्मनात्मनि संयोज्य ममात्मन्यनुसंस्मरेत् ।
एवं बुद्धेः परंबुद्ध्वा लभते न पुनर्भवम् ॥७९

ॐ नमो भगवते तस्मै देहिनां परमात्मने।
नारायणाय भक्तानामेकनिष्ठाय शाश्वते ॥८०
इतिख्याय च भूतानां सर्वेषां च महात्मने।
इमामनुस्मृतिन्दिव्यां वैष्णवीं पापनाशनीम् ॥८१
स्वयम्भिवुद्धश्च पठेद्यत्र तत्र समभ्यसेत्।
मरणे समनुप्राप्ते यस्त्विमामनुसंस्मरेत् ॥८२
अपि पापसमाचारः स याति परमाङ्गतिम्।
यद्यहङ्कारमाश्रित्य यज्ञदानतपः क्रियाः ॥८३
कुर्वंस्तत्फलमाप्नोति पुनरावर्तते नतु।
अभ्यर्चयन् पितॄन्देवान् पठन् जुह्वन् बलिन्ददन् ॥८४
ज्वलदग्निं स्मरेद्यो मां लभते परमाङ्गतिम्।
यज्ञोदानं तपः कर्म पावनानि मनीषिणाम् ॥८५
यज्ञोदानं तपस्तस्मात्कुर्यादाशाविवर्जितः।
पौर्णमास्याममावास्यां द्वादश्यां च विशेषतः ॥८६
श्रावयेच्छ्रद्दधानांश्चमद्भक्तांश्च विशेषतः।
नम इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयान्वितः ॥८७
तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद।
किं पुनर्ये यजन्ते मां साधका विधिपूर्वकम् ॥८८
श्रद्धावन्तो यतात्मान स्ते मां यान्ति मदाश्रिताः।
कर्माण्याद्यन्तवन्तीह मद्भक्तोऽनन्तमश्नुते ॥८९
मामेव तस्माद्देवर्षे ध्याहि नित्यमतन्द्रितः।
अवाप्स्यसि तपः सिद्धिं लभ्यसे च पदं मम ॥९०

अज्ञाना मिच्छया ज्ञातं दद्याद्धर्मोपदेशनम् ।
कृत्स्नां वा पृथिवीं दद्यात्तेन तुल्यं न तत्फलम् ॥६१
अस्मात् प्रदेयं साधुभ्यो जन्मवन्धभयापहम् ।
अश्वमेधसहस्राणां सहस्रं यः समाचरेत् ॥६२
नासौ फल मवाप्नोति मद्भक्तैर्यदवाप्यते ।

भीष्म उवाच ॥

एवं पृष्टः पुरा तेन नारदेन सुरर्षिणा ।
यदुवाच तथा शम्भुस्तदुक्तं तव सुव्रत ॥६३
त्वमप्येकमना भूत्वा ध्येयं ज्ञेयं गुणाधिकम ।
भज सर्वेण भावेन परमात्मान मव्ययम् ॥६४
श्रुत्वैतत् नारदो वाक्यं दिव्यं नारायणेरितम ।
अत्यन्तभक्तिमान्देवे एकान्तित्व मुपेयिवान् ॥६५
नारायण मृषीन्देवं दशवर्षाण्यनन्यभाक् ।
इदं जपन्वै प्राप्नोति तद्विष्णोः परमं पदम् ॥६६
किं तस्य बहुभिर्मन्त्रैः किं तस्य बहुभिर्व्रतैः ।
नमो नारायणायेति मन्त्रः सर्वार्थसाधकः ॥६७
नारायणाय नम ओ मिति वेदमन्त्रं-
यो नित्यमेव मनसापि समभ्यसेच्च ।
पापैः प्रमुच्य परमे तृषयातिविष्णोः-
स्थानं हि सर्व मिति वेदविदो वदन्ति ॥६८
किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ।
यो नित्यं ध्यायते देव ! नारायण मनन्यधीः ॥६९

चीरवासा जपी वापि त्रिदण्डी मुण्ड एव वा।
भूषितो वा द्विजश्रेष्ठ! न लिङ्गं धर्मकारणम् ॥१००
ये नृशंसा दुरात्मानः पापधर्मविवर्जिताः।
तेऽपि यान्ति परं स्थानं नारायणपरायणाः ॥१०१
अन्यथा मन्दबुद्धीनां प्रतिभाति दुरात्मनाम्।
कुतर्कज्ञानदृष्टीनां विश्रान्तेन्द्रियवर्त्मनाम् ॥१०२
नमो नारायणायेति ये विदुर्ब्रह्म शाश्वतम्।
अन्तकाले जपन्नेति तद्विष्णोः परमं पदम् ॥१०३
आचारहीनो । मुनिप्रवीर भक्त्या विहीनोऽपितु विन्दतोऽपि।
संकीर्त्य नारा...शब्दमात्रं विमुक्तपापो विशतेऽच्युतां गतिम् ॥१०४
कान्तारवनदुर्गेषु कृत्स्नेष्वापत्सु संयुगे।
दस्युभिः सन्निरोधे च नामभि र्मां प्रकीर्तयेत् ॥१०५
न दिव्यपुरुषो धीमान् येषु स्थानेषु मां स्मरेत्।
चौरव्याघ्र महासर्पैः क्रूरैरपि न बाध्यते ॥१०६
जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः।
नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥१०७
नामास्ति याति शक्तिश्च पापे निर्हरणे हरेः।
श्वपचोऽपि नरः कर्तुं क्षमस्तावन्न किल्विषम् ॥१०८
न तावत् पापमस्तीह यावन्नामहृतं हरेः।
अतिरेक भयादाहुः प्रायश्चित्तान्तरं बुधाः ॥१०९
गत्वा गत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः।
अद्यापि न निवर्तन्ते द्वादशाक्षरचिन्तकाः ॥११०

न वासुदेवात्परमस्ति मङ्गलं न वासुदेवात्परमस्ति पावनम् ।
न वासुदेवात्परमस्ति दैवतं न वासुदेवं प्रणिपत्य सीदति ॥१११
इमां रहस्यां परमामनुस्मृतिं ह्यधीत्य बुद्धिं लभते च नैष्ठिकम् ॥

विहाय दुःखानि विमुच्य सङ्कटात्
स वीतरागो विचरेन्मही मिमाम् ॥११२
गङ्गायां मरणं चैव दृढा भक्तिश्च केशवे
ब्रह्मविद्याप्रबोधश्च नाल्पस्य तपसः फलम् ॥११३

इति विष्णुस्मृतिः समाप्ता ॥

---

॥ अथ ॥

# * विष्णुस्मृतिः । *

श्रीगणेशाय नमः ।

तत्र प्रथमोऽध्यायः ।

ब्रह्मरात्र्यां व्यतीतायां प्रबुद्धे पद्मसम्भवे ।
विष्णुः सिसृक्षुर्भूतानि ज्ञात्वा भूमिं जलानुगाम् ॥१
जलक्रीड़ारुचि शुभं कल्पादिषु यथा पुरा ।
वाराहमास्थितोरूपमुज्जहार वसुन्धराम् ॥२
वेदपादो यूपदंष्ट्रः क्रतुवक्त्रश्चितामुखः ।
अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः ॥३
अहोरात्रेक्षणो दिव्यो वेदाङ्गश्रुतिभूषणः ।
आज्यनासः श्रवस्तुण्डः सामघोषमहास्वनः ॥४
धर्मसत्यमयः श्रीमान् क्रमविक्रमसत्कृतः ।
प्रायश्चित्तमयो वीरः प्रांशुजानुर्महावृषः ॥५
उद्गात्रन्त्रो होमलिङ्गो वीजौषधिमहाफलः ।
वेद्यन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ॥६
वेदस्कन्धो हविर्गन्धो हव्यकव्यादिवेगवान् ।
प्राग्वंशकायो द्युतिमान् नानादीक्षाभिरन्वितः ॥७
दक्षिणाहृदयो योगमहामन्त्रमयो महान् ।
उपाकर्मोष्ठरुचिरः प्रवर्ग्यावर्त्तभूषणः ॥८

नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।
छायापत्नीसहायोऽसौ मणिशृङ्गइवोदितः ॥९
महीं सागरपर्यान्तां सशैलवनकाननाम् ।
एकार्णवजलभ्रष्टानेकार्णवगतः प्रभुः ॥१०
दंष्ट्राग्रेण समुद्धृत्य लोकानां हितकाम्यया ।
आदिदेवो महायोगी चकार जगतीं पुनः ॥११
एवं यज्ञवराहेण भूत्वा भूतहितार्थिना ।
उद्धृता पृथिवी सर्वा रसातलगता पुरा ॥१२
उद्धृत्य निश्चले स्थाने स्थापिता च तथा स्वके ।
यथास्थानं विभज्यापस्तद्गता मधुसूदनः ॥१३
सामुद्रयश्च समुद्रेपु नादेयाश्च नदीपु च ।
पल्लेषु च पाल्लयः सरःसु च सरोवराः ॥१४
पातालसप्तकं चक्रे लोकानां सप्तकं तथा ।
द्वीपानामुदधीनाञ्च स्थानानि विविधानि च ॥१५
स्थानपालांल्लोकपालान्नदीशैलवनस्पतीन् ।
ऋषींश्च सप्त धर्मज्ञान् वेदान् साङ्गान् सुरासुरान् ॥१६
पिशाचोरगगन्धर्वयक्षराक्षसमानुषान् ।
पशुपक्षिमृगाद्यांश्च भूतग्रामं चतुर्व्विधम् ॥१७
मेघेन्द्रचापसम्पातान् यज्ञांश्च विविधांस्तथा ।
एवं वराहो भगवान् कृत्वेदं सचराचरम् ॥१८
जगज्जगाम लोकानामविज्ञातां तदा गतिम् ।
अविज्ञातां गतिं याते देवदेवे जनार्द्दने ॥१९

वसुधा चिन्तयामास का धृतिर्म्मे भविष्यति।
पृच्छामि कश्यपं गत्वा स मे वक्ष्यत्यसंशयम् ॥२०
मदीयां वहते चिन्तां नित्यमेव महामुनिः।
एवं स निश्चयं कृत्वा देवी स्त्रीरूपधारिणी ॥२१
जगाम कश्यपं द्रष्टुं दृष्टवांस्ताञ्च कश्यपः।
नीलपङ्कजपत्राक्षीं शारदेन्दुनिभाननाम् ॥२२
अलिसङ्घालकां शुभ्रां बन्धुजीवाधरां शुभाम्।
सुशुभ्रस्पष्टदशनां चारुनासां नतभ्रुवम् ॥२३
कम्बुकण्ठीं संहतोरूं पीनोरुजघनस्थलीम्।
विरेजतुस्ततो यस्याः समौ पीनौ निरन्तरौ ॥२४
मत्तेभकुम्भसङ्काशौ शातकुम्भसमद्युती।
मृणालकोमलौ बाहू करौ किशलयोपमौ ॥२५
रुक्मस्तम्भनिभावूरू गूढे श्लिष्टे च जानुनी।
जङ्घे विरोमे सुषमे पादावतिमनोरमौ ॥२६
जघनञ्च घनं मध्यं यथा केशरिणः शिशोः।
प्रभायुता नखास्ताम्रा रूपं सर्व्वमनोहरम् ॥२७
कुर्व्वाणां वीक्षितैर्नित्यं नीलोत्पलयुता दिशः।
कुर्व्वाणां प्रभया देवीं तथा वितिमिरा दिशः ॥२८
सुसूक्ष्मशुक्लवसनां रत्नोत्तमविभूषिताम्।
पदन्यासैर्वसुमतीं सपद्मामिव कुर्वतीं ॥२९
रूपयौवनसम्पन्नां विनीतवदुपस्थिताम्।
समीपमागतां दृष्ट्वा पूजयामास कश्यपः ॥३०

उवाच तां वरारोहे! विज्ञातं हृद्गतं मया।
धरे तव विशालाक्षि! गच्छदेवि जनार्दनम्॥३१
स ते वक्ष्यत्यशेषेण भाविनी ते यथा स्थितिः।
क्षीरोदे वसतिस्तस्य मया ज्ञाता शुभानने॥३२
ध्यानयोगेन चार्वङ्गि तज्ज्ञानं तत्प्रसादतः॥
इत्येवमुक्त्वा सम्पूज्य कश्यपं वसुधा ततः।
प्रययौ केशवं द्रष्टुं क्षीरोदमथ सागरम्॥३३
सा ददर्शामृतनिधिं चन्द्ररश्मिमनोहरम्।
पवनक्षोभसंजातवीचीशतसमाकुलम्॥३४
हिमवच्छतसङ्काशं भूमण्डलमिवापरम्।
वीचीहस्तैर्धवलितैराह्वयानमिव क्षितिम्॥३५
तैरेव शुभ्रतां चन्द्रे विदधानमिवानिशम्।
अन्तरस्थेन हरिणा विगताशेषकल्मषम्॥३६
यस्मात्तस्मात्तु विभ्रन्तं सुशुभ्रां तनुमूर्जिताम्।
पाण्डरं खगमागम्यमधोभुवनवर्त्तिनम्॥३७
इन्द्रनीलकडाराढ्यं विपरीतमिवाम्बरम्।
फलावलीसमुद्भूतवनसङ्घसमाचितम्॥३८
निर्म्मोकमिव शेषाहेर्विस्तीर्णं तमतीव हि।
तं दृष्ट्वा तच्च मध्यस्थं ददृशे केशवालयम्॥३९
अनिर्देश्यपरामाणमनिर्देश्यर्द्धिसंयुतम्।
शेषपर्यङ्कशं तस्मिन् ददर्श मधुसूदनम्॥४०

शेषाहिफणरत्नांशुदुर्विभाव्य मुखाम्बुजम्।
शशाङ्कशतसङ्काशं सूर्यायुतसमप्रभम्॥४१
पीतवाससमक्षोभ्यं सर्वरत्नविभूषितम्।
मुकुटेनार्कवर्णेन कुण्डलाभ्यां विराजितम्॥४२
संवाह्यमानाङ्घ्रियुगं लक्ष्म्या करतलैः शुभैः।
शरीरधारिभिः शस्त्रैः सेव्यमानं समन्ततः॥४३
तं दृष्ट्वा पुण्डरीकाक्षं ववन्दे मधुसूदनम्।
जानुभ्यामवनीं गत्वा विज्ञापयति चाप्यथ॥४४
उद्धृताहं त्वया देव! रसातलतलङ्गता।
स्वे स्थाने स्थापिता विष्णो! लोकानां हितकाम्यया॥४५
तत्राधुना मे देवेश! का धृतिर्वै भविष्यति।
एवमुक्तस्तदा देव्या देवो वचनमब्रवीत्॥४६
वर्णाश्रमाचाररताः शास्त्रैकतत्परायणाः।
त्वां धरे! धारयिष्यन्ति तेषां तद्भारं आहितः॥४७
एवमुक्ता वसुमती देवदेवमभाषत।
वर्णानामाश्रमाणाञ्च धर्मान् वद सनातनान्॥४८
त्वत्तोऽहं श्रोतुमिच्छामि त्वं हि मे परमा गतिः।
नमस्ते देव! देवेश! देवारिबलसूदन!॥४९
नारायण! जगन्नाथ! शङ्खचक्रगदाधर!।
पद्मनाभ! हृषीकेश! महाबलपराक्रम!॥५०
अतीन्द्रिय! सुदुष्पार! देव! शार्ङ्गधनुर्द्धर!।
वराह! भीम! गोविन्द! पुराण! पुरुषोत्तम!॥५१

हिरण्यकेश ! विश्वाक्ष ! यज्ञमूर्त्ते ! निरञ्जन ! ।
क्षेत्र ! क्षेत्रज्ञ ! लोकेश ! सलिलान्तरशायक ! ॥५२
यन्त्रमन्त्रवहाचिन्त्य ! वेदवेदाङ्गविग्रह ! ।
जगतोऽस्य समग्रस्य सृष्टिसंहारकारक ! ॥५३
सर्वधर्मज्ञ ! धर्माङ्ग ! धर्मयोने ! वरप्रद ! ।
विश्वक्सेनामृत ! व्योम ! मधुकैटभसूदन ! ॥५४
बृहतां बृहणाजेय ! सर्व ! सर्वाभयप्रद ! ।
वरेण्यानघ ! जीमूताव्यय ! निर्वाणकारक ! ॥५५
आप्यायन ! अपांस्थान ! चैतन्याधार ! निष्क्रिय ! ।
सप्तशीर्षाध्वरगुरो ! पुराण ! पुरुषोत्तम ! ॥५६
ध्रुवाक्षर ! सुसूक्ष्मेश ! भक्तवत्सलपावन ! ।
त्वंगतिः सर्व देवानां त्वं गतिर्ब्रह्मवादिनाम् ॥५७
तथा विदितवेद्यानां गतिस्त्वं पुरुषोत्तम ! ।
प्रपन्नास्मि जगन्नाथ ! ध्रुवं वाचस्पतिं प्रभुम् ॥५८
सुब्रह्मण्यमनाधृष्यं वसुखेलं वसुप्रदम् ।
महायोगबलोपेतं पृश्निगर्भं धृतार्च्चिषम् ॥५९
वासुदेवं महात्मानं पुण्डीकाक्षमच्युतम् ।
सुरासुरगुरुं देवं विभुं भूतमहेश्वरम् ॥६०
एकव्यूहं चतुर्वक्त्रं जगत्कारणकारणम् ।
ब्रूहि मे, भगवन् ! धर्म्मांश्चातुर्वर्ण्यस्य शाश्वतान् ॥६१
आश्रमाचारसंयुक्तान् सरहस्यान् ससंग्रहान् ।
एवमुक्तस्तु देवेशः पुनः क्षौणीमभाषत ॥६२

शृणु देवि! धरे! धर्म्मांश्चातुर्वर्ण्यस्य शाश्वतान्।
आश्रमाचारसंयुक्तान् सरहस्यान् ससंग्रहान् ॥६५
ये तु त्वां धारयिष्यन्ति सन्तस्तेषां परायणान्।
निषण्णा भव वामोरु काञ्चनेऽस्मिन् वरासने ॥६६
सुखासीना निबोध त्वं धर्मान्निगदतो मम।
शुश्रुवे वैष्णवान् धर्म्मान् सुखासीना धरा तदा ॥७६

इति वैष्णवे धर्मशास्त्रे प्रथमोऽध्यायः॥

---

अथ द्वितीयोऽध्यायः

ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति वर्णाश्चत्वारः।
तेषामाद्या द्विजातयः।
तेषां निषेकाद्यः श्मशानान्तो मन्त्रवत् क्रियासमूहः।
तेषाञ्च धर्माः ब्राह्मणस्याध्यापयनं क्षत्रियस्य शस्त्रनिष्ठता
वैश्यस्य पशुपालनं शूद्रस्य द्विजातिशुश्रूषा।
द्विजानां यजनाध्ययने।
अथैतेषां वृत्तयः ब्राह्मणस्य याजनप्रतिग्रहौ क्षत्रियस्य
क्षितित्राणं कृषिगोरक्षवाणिज्यकुसीदयोनिपोषणानि
वैश्यस्य, शूद्रस्य सर्वशिल्पानि। आपद्यनन्तरा वृत्तिः
क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया॥

आर्ज्जवत्वमलोभश्च देवब्राह्मणपूजनम्।
अनभ्यसूया च तथा धर्मः सामान्यउच्यते।

इति वैष्णवे धर्मशास्त्रे द्वितीयोऽध्यायः।

---

## अथ तृतीयोऽध्यायः।

### अथ राजधर्माः॥

प्रजापरिपालनं वर्णाश्रमाणां स्वे स्वे धर्मे व्यवस्थापनम्। राजा च जाङ्गलं पशव्यं शस्योपेतं देशमाश्रयेत् वैश्यशूद्रपादश्च तत्र धन्वनृमहीवारिवृक्षगिरिदुर्गाणा मन्यतमं दुर्गमाश्रयेत्। तत्र ग्रामाध्यक्षानपि कुर्यात्। दशाध्यक्षान्। शताध्यक्षान्। देशाध्यक्षांश्च। ग्रामदोषाणां ग्रामाध्यक्षः परीहारं कुर्य्यात्। अशक्तो दशग्रामाध्यक्षाय निवेदयेत्। सोऽप्यशक्तः शताध्यक्षाय। सोऽप्यशक्तो देशाध्यक्षाय। देशाध्यक्षोऽपि सर्व्वात्मना दोषमुच्छिन्द्यात्। आकरशुल्कतरनागवनेष्वाप्तान्नियुञ्जीत। धर्मिष्ठान् धर्मकार्य्येषु। निपुणानर्थकार्य्येषु। शूरान् संग्रामकर्म्मसु। उग्रानुग्रेषु षण्ढान् स्त्रीषु। प्रजाभ्यो वल्यर्थं सम्वत्सरेण धान्यतः षष्ठमंशमादद्यात्। सर्वशस्येभ्यश्च द्विकं शतम्। पशुहिरण्येभ्यो वस्त्रेभ्यश्च।

मांसमधुघृतौषधिगन्धमूलफलरसदारु पत्राजिनमृंद्भाण्डा-
श्मभाण्डवैदलेभ्यः षष्ठभागम्।

ब्राह्मणेभ्यः करादानं न कुर्यात् ते हि राज्ञो धर्मकरदाः।

राजा च प्रजाभ्यः सुकृतदुष्कृतषष्ठांशभाक्।

स्वदेशपण्याच्च शुल्कांशं दशममादद्यात् परदेशपण्याच्च विंशतितमम्। शुल्कस्थानमपक्रामन् सर्वापहारित्वमाप्नुयात्।

शिल्पिनः कर्मजीविनश्च शूद्राश्च मासेनैकं राज्ञः कर्म कुर्य्युः।

स्वाम्यमात्यदुर्गकोषदण्डराष्ट्रमित्राणि प्रकृतयः।

तद्दूषकांश्च हन्यात्। स्वराष्ट्रपरराष्ट्रयोश्च चारचक्षुः स्यात्।

साधूनां पूजनं कुर्य्यात्। दुष्टांश्च हन्यात्।

शत्रुमित्रोदासीनमध्यमेषु सामभेददानदण्डान् यथार्हं यथाकालं प्रयुञ्जीत।

सन्धिविग्रहयानासनसंश्रयद्वैधीभावांश्च यथाकालमाश्रयेत्।

चैत्रे मार्गशीर्षे वा यात्रां यायात्। परस्य व्यसने वा।

परदेशावाप्तौ तद्देशधर्मान्नोच्छिन्द्यात्।

परेणाभियुक्तश्च सर्व्वात्मना राष्ट्रं गोपायेत्।

नास्ति राज्ञां समरे तनुत्यागसदृशोधर्मः।

गोब्राह्मणनृपतिमित्रधनदारजीवितरक्षणाद्ये हतास्ते स्वर्गभाजः।

वर्णशङ्कररक्षणार्थे च।

राजा पुरावाप्तौ तत्र तत्कुलीनमभिषिञ्चेत्॥

न राजकुलमुच्छिन्द्यात्। अन्यत्राकुलीनराजकुलात्।

मृगयाक्षस्त्रीपानेष्वभिरतिं न कुर्य्यात्।

वाक्पारुष्यदण्डपारुष्ये च नार्थदूषणं कुर्य्यात्।
आयद्वाराणि नोच्छिन्द्यात्। नापात्रवर्षी स्यात्।
आकरेभ्यः सर्वमादद्यात्॥
निधिं लब्ध्वा तदर्द्धं ब्राह्मणेभ्यो दद्यात् द्वितीयमर्द्धं कोशे–
प्रवेशयेत्। निधिं ब्राह्मणो लब्ध्वा सर्वमादद्यात्।
क्षत्रियश्चतुर्थमंशं राज्ञे दद्यात् चतुर्थमंशं–
ब्राह्मणेभ्योऽर्द्धमादद्यात्।
वैश्यश्चतुर्थमंशं राज्ञे दद्यात् ब्राह्मणेभ्योऽर्द्धमंशमादद्यात्।
शूद्रश्चावाप्तं द्वादशधा विभज्य पञ्चांशान् राज्ञे दद्यात्
पञ्चांशान् ब्राह्मणेभ्योऽंशद्वयमादद्यात्।
अनिवेदितविज्ञातस्य सर्वमपहरेत्।
स्वनिहिताद्राज्ञे ब्राह्मणवर्ज्जं द्वादशमंशं दद्युः।
परनिहितं स्वनिहितमिति ब्रुवंस्तत्समं दण्डमावहेत्॥
बालानाथस्त्रीधनानि च राजा परिपालयेत्।
चौरहृतं धनमवाप्य सर्वमेव सर्ववर्णेभ्योदद्यात्।
अनवाप्य च स्वकोशादेव दद्यात्।
शान्तिस्वस्त्ययनैर्दैवोपघातान् प्रशमयेत्।
परचक्रोपघातांश्च शस्त्रनित्यतया।
वेदेतिहासधर्मशास्त्रार्थकुशलं कुलीनमव्यङ्गं–
तपस्विनं पुरोहितञ्च वरयेत्।
शुचीनलुब्धानवहिताञ्छक्तिसम्पन्नान् सर्व्वार्थेषु च–
सहायान् स्वयमेव व्यवहारान् पश्येद्विद्वद्भिर्ब्राह्मणैः सार्द्धम्।

व्यवहारदर्शने ब्राह्मणं वा नियुञ्ज्यात्।

जन्मकर्मव्रतोपेताश्च राज्ञा सभासदः कार्य्यारिपौ मित्रे च–ये समाः कामक्रोधलोभादिभिः कार्य्यार्थिभिरनाहार्य्याः।

राजा च सर्वकार्य्येषु सम्वत्सराधीनः स्यात्।

देवब्राह्मणान् सततमेवपूजयेत्।

वृद्धसेवी भवेत्। यज्ञयाजी च।

नचास्य विषये ब्राह्मणः क्षुधार्त्तोऽवसीदेत्।

नचान्योऽपि सत्कर्मनिरतः।

ब्राह्मणेभ्यश्च भुवं प्रतिपादयेत्।

येषाञ्च प्रतिपादयेत्तेषां स्ववंश्यानन्तरप्रमाणं दानच्छेदोपवर्णनञ्च पटे ताम्रपात्रे वा लिखितं स्वमुद्राङ्कितञ्चागामिनृपविज्ञापनार्थं दद्यात्। परदत्ताञ्च भुवं नापहरेत्।

ब्राह्मणेभ्यः सर्वदायान् प्रयच्छेत्।

सर्वतस्त्वात्मानं गोपायेत् सुदर्शनश्च स्यात्।

विषघ्नागदमन्त्रधारी च। नापरीक्षितमुपयुञ्ज्यात्।

स्मितपूर्व्वाभिभाषी स्यात्। वध्येष्वपि न भ्रुकुटीमाचरेत्।

अपराधानुरूपञ्च दण्डं दण्ड्येषु दापयेत्।

सम्यग्दण्डप्रणयनं कुर्य्यात्। द्वितीयमपराधं न कस्यचित् क्षमेत।

स्वधर्म्मपालयन्नादण्ड्योनामास्ति राज्ञः।

यत्र श्यामो लोहिताक्षो दण्डश्चरति निर्भरः।
प्रजास्तत्र विवर्द्धन्ते नेता चेत् साधु पश्यति।
स्वराष्ट्रे न्यायदण्डः स्याद्भृशदण्डश्च शत्रुषु।

सुहृत्स्वजिह्मः स्निग्धेषु ब्राह्मणेषु क्षमान्वितः।
एवं वृत्तस्य नृपतेः शिलोञ्छेनापि जीवतः।
विस्तीर्यते यशोलोके तैलविन्दुरिवाम्भसि।
प्रजासुखे सुखी राजा तद्दुःखे यश्च दुःखितः।
स कीर्त्तियुक्तो लोकेऽस्मिन् प्रेत्य स्वर्गे महीयते॥

इति वैष्णवे धर्मशास्त्रे तृतीयोऽध्यायः॥

---

## ॥ अथ चतुर्थोऽध्यायः ॥

जालस्थार्कमरीचिगतं रजस्त्रसरेणुसंज्ञकम्।
तदष्टकं लिख्या। तत्त्रयं राजसर्षपः। तत्त्रयं गौरसर्षपः।
तत्षट्कं यवः। तत्त्रयं कृष्णलम्। तत्पञ्चकं माषः।
तद्द्वादशकमक्षार्द्धम्। अक्षार्द्धमेव सचतुर्माषकं सुवर्णः।
चतुःसुवर्णकोनिष्कः। द्वे कृष्णले समधृते रूप्यमाषकः।
तत्षोडशकं धरणम्। ताम्रकार्षिकः कार्षापणः।
पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः।
मध्यमः पञ्च विज्ञेयः सहस्रं त्वेव चोत्तमः॥

इति वैष्णवे धर्मशास्त्रे चतुर्थोऽध्यायः॥

.........

अथ महापातकिनो ब्राह्मणवर्ज्जं सर्वे वध्याः।
न शारीरो ब्राह्मणस्य दण्डः।
स्वदेशाद्ब्राह्मणं कृताङ्कं विवासयेत्।
तस्य च ब्रह्महत्यायामशिरस्कं पुरुषं ललाटे कुर्यात्।
सुराध्वजं सुरापाने। श्वपदं स्तेये। भगं गुरुतल्पगमने।
अन्यत्रापि वध्यकर्मणि तिष्ठन्तं समग्रधनमक्षतं विवासयेत्।
कूटशासनकर्तॄंश्च राजा हन्यात्। कूटलेख्यकारांश्च।
गरदाग्निदप्रसह्यतस्करान् स्त्रीबालपुरुषघातिनश्च।
ये च धान्यं दशभ्यः कुम्भेभ्योऽधिकमपहरेयुः।
धरिममेयानां शतादप्यधिकं।
ये चाकुलीना राज्यमभिकामयेयुः।
सेतुभेदकांश्च प्रसह्यतस्कराणाम्बावकाशभक्तप्रदांश्च।
अन्यत्र राजाशक्तेः स्त्रियमशक्तभर्तृकां तदतिक्रमणाच्च।
हीनवर्णोऽधिकवर्णस्य येनाङ्गेनापराधं कुर्यात्तदेवास्य शातयेत्।
एकासनोपवेशी कट्यां कृताङ्को निर्वास्यः।
निष्ठीव्योष्ठद्वयविहीनः कार्यः अवशब्दयिता च गुदहीनः।
आक्रोशयिता च विजिह्वः।
दर्पेण धर्मोपदेशकारिणो राजा तप्तमासेचयेत्तैलमास्ये।
द्रोहेण च नामजातिग्रहणे दशाङ्गुलोऽस्य शङ्कुर्निखेयः।
श्रुतदेशजातिकर्मणामन्यथावादी कार्षापणशतद्वयम् दण्ड्यः।
काणखञ्जादिनां तथावाद्यपि कार्षापणद्वयम्।
गुरूनाक्षिपन् कार्षापणशतम्।
परस्य पतनीयाक्षेपे कृते तूत्तमसाहसं।

शिष्योभार्य्या शिशुर्भ्राता पुत्रो दासः समाश्रितः ।
यस्यैतानि विनीतानि तस्य लोके हि गौरवम् ॥१४
प्रथमा धर्मपत्नी च द्वितीया रतिवर्द्धिनी ।
दृष्टमेव फलं तत्र नादृष्टमुपजायते ॥१५
धर्मपत्नी समाख्याता निर्दोषा यदि सा भवेत् ।
दोषे सति न दोषः स्यादन्या भार्य्या गुणान्विता ॥१६
अदुष्टापतितां भार्य्यां यौवने यः परित्यजेत् ।
स जीवनान्ते स्त्रीत्वञ्च वन्ध्यत्वञ्च समाप्नुयात् ॥१७
दरिद्रं व्याधितं चैव भर्त्तारं यावमन्यते ।
शुनी गृध्री च मकरी जायते सा पुनः पुनः ॥१८
मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
सा भवेत्तु शुभाचारा स्वर्गलोके महीयते ॥१९
व्यालग्राही यथा व्यालं बलादुद्धरते विलात् ।
तथा सा पतिमुद्धृत्य तेनैव सह मोदते ॥२०
चाण्डालप्रत्यवसितपरिव्राजकतापसाः ।
तेषां जातान्यपत्यानि चाण्डालैः सह वासयेत् ॥२१

इति दाक्षे धर्मशास्त्रे चतुर्थोऽध्यायः ॥

.........

## ॥ अथ पञ्चमोऽध्यायः ॥

उक्तं शौचमशौचञ्च कार्य्यं त्यज्यं मनीषिभिः।
विशेषार्थं तयोः किञ्चिद्वक्ष्यामि हितकाम्यया ॥१
शौचे यत्नः सदाकार्य्यः शौचमूलोद्विजः स्मृतः।
शौचाचारविहीनस्य समस्तनिष्फलाः क्रियाः ॥२
शौचञ्च द्विविधं प्रोक्तं वाह्यमाभ्यन्तरन्तथा।
मृज्जलाभ्यां स्मृतं वाह्यं भावशुद्धिस्तथान्तरम् ॥३
अशौचाद्धि वरं वाह्यं तस्मादाभ्यन्तरं वरम्।
उभाभ्याञ्च शुचिर्यस्तु स शुचिर्नेतरः शुचिः ॥४
एका लिङ्गे गुदे तिस्रोदश वामकरे तथा।
उभयोः सप्त दातव्या मृदस्तिस्रस्तु पादयोः ॥५
गृहस्थशौचमाख्यातं त्रिष्वन्येषु यथाक्रमम्।
द्विगुणं त्रिगुणञ्चैव चतुर्थस्य चतुर्गुणम् ॥६
अर्द्धप्रसृतिमात्रन्तु प्रथमा मृत्तिका स्मृता।
द्वितीया च तृतीया च तदर्द्धं परिकीर्तिता ॥७
लिङ्गेऽप्यत्र समाख्याता त्रिपर्वी पूर्य्यते यया।
एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम् ॥८
त्रिगुणन्तु वनस्थानां यतीनाञ्च चतुर्गुणम्।
दातव्यमुदकन्तावन्मृदभावोयथा भवेत् ॥९
मृदा जलेन शुद्धिः स्यान्नक्लेशो न धनव्ययः।
यस्य शौचेऽपि शैथिल्यं चित्तं तस्य परीक्षितम् ॥१०

अन्यदेव दिवाशौचं रात्रावन्यद्विधीयते ।
अन्यदापत्सु विप्राणामन्यदेव ह्यनापदि ॥११

दिवोदितस्य शौचस्य रात्रावर्द्धं विधीयते ।
तदर्द्धं मातुरस्याहुस्त्वरायामर्द्धमध्वनि ॥१२

न्यूनाधिकं न कर्तव्यं शौचे शुद्धिमभीप्सिता ।
प्रायश्चित्तेन युज्येत विहितातिक्रमे कृते ॥१३

इति दाक्षे धर्मशास्त्रे पञ्चमोऽध्यायः ॥

---

॥ अथ षष्ठोऽध्यायः ॥

सूतकं तु प्रवक्ष्यामि जन्ममृत्युसमुद्भवम् ।
यावज्जीवं तृतीयन्तु यथावदनुपूर्वशः ॥१

सद्यः शौचं तथैकाहोद्वित्रिचतुरहस्तथा ।
दशाहो द्वादशाहश्च पक्षोमासस्तथैव च ॥२

मरणान्तं तथा चान्यद्दशपक्षन्तु सूतके ।
उपन्यस्तक्रमेणैव वक्ष्याम्यहमशेषतः ॥३

ग्रन्थार्थं यो विजानाति वेदमङ्गैः समन्वितम् ।
सकल्पं सरहस्यञ्च क्रियावांश्चेन्न सूतकी ॥४

राजर्त्विग्दीक्षितानाञ्च बाले देशान्तरे तथा ।
व्रतिनां सत्रिणाञ्चैव सद्यः शौचं विधीयते ॥५

एकाहस्तु समाख्यातो योऽग्निवेदसमन्वितः।
हीने हीनतरेचैव द्वित्रिचतुरहस्तथा ॥६
जातिविप्रो दशाहेन द्वादशाहेन भूमिपः।
वैश्य पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥७
अस्नात्वा चाप्यहुत्वा च भुङ्क्तेऽदत्वा च यः पुनः।
एवं विधस्य सर्वस्य सूतकं समुदाहृतम्।
व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्वदा।
क्रियाहीनस्य मूर्खस्य स्त्रीजितस्य विशेषतः ॥८
व्यसनासक्तचित्तस्य पराधीनस्य नित्यशः।
श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत् ॥९
न सूतकं कदाचित् स्याद्यावज्जीवन्तु सूतकम्।
एवं गुणविशेषेण सूतकं समुदाहृतम् ॥१०
सूतके मृतके चैव तथा च मृतसूतके।
एतत्संहतशौचानां मृतशौचेन शुद्ध्यति ॥११
दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते।
दशाहात्तु परं शौचं विप्रोऽर्हति च धर्मवित् ॥१२
दानञ्च विधिना देयं अशुभात्तारकं हि तत्।
मृतकान्ते मृतो यस्तु सूतकान्ते च सूतकम् ॥१३
एतत्संहतशौचानां पूर्वाशौचेन शुद्ध्यति।
उभयत्र दशाहानि कुलस्यान्नं न भुज्यते ॥१४
चतुर्थेऽहनि कर्त्तव्यमस्थि सञ्चयनं द्विजैः।
ततः सञ्चयनादूर्द्ध्वं मङ्गस्पर्शो विधीयते ॥१५

वर्णानामनुलोम्येन स्त्रीणामेकोयदा पतिः ।
दशषट्त्र्यहमेकाहः प्रसवे सूतकं भवेत् ॥१६
यज्ञकाले विवाहे च देशभङ्गे तथैव च ।
हूयमाने तथाग्नौ च नाशौचं मृतसूतके ॥१७
स्वस्थकाले त्विदं सर्वमशौचं परिकीर्तितम् ।
आपद्गतस्य सर्वस्य सूतके नतु सूतकम् ॥१८

इति दाक्षे धर्मशास्त्रे षष्ठोऽध्यायः ॥

—:※:—

## ॥ अथ सप्तमोऽध्यायः ॥

लोको वशीकृतो येन येन चात्मा वशीकृतः ।
इन्द्रियार्थो जितो येन तं योगं प्रब्रवीम्यहम् ॥१
प्राणायामस्तथा ध्यानं प्रत्याहारस्तु धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥२
नारण्यसेवनाद्योगो नानेकग्रन्थचिन्तनात् ।
व्रतैर्यज्ञैस्तपोभिश्च न योगः कस्यचिद्भवेत् ॥३
नच पथ्याशनाद्योगो न नासाग्रनिरीक्षणात् ।
नच शास्त्रातिरिक्तेन शौचेन स भवेत् क्वचित् ॥४
न मौनमन्त्रकुहकैरनेकैः सुकृतैस्तथा ।
लोकयात्राावियुक्तस्य योगो भवति कस्यचित् ॥५

अभियोगात्तथाभ्यासात्तस्मिन्नेव तु निश्चयात् ।
पुनः पुनश्च निर्वेदाद्योगः सिद्ध्यति नान्यथा ॥६
आत्मचिन्ताविनोदेन शौचक्रीड़नकेन च ।
सर्व्वभूतसमत्वेन योगः सिध्यति नान्यथा ॥७
यश्चात्मनि रतोनित्यमात्मक्रीडस्तथैव च ।
आत्मनिष्ठश्च सततमात्मन्येव स्वभावतः ॥८
रतश्चैव स्वयं तुष्टः सन्तुष्टो नान्यमानसः ।
आत्मन्येव सुतृप्तोऽसौ योगस्तस्य प्रसिद्ध्यति ॥६
सुप्तोऽपि योगयुक्तः स्याज्जाग्रच्चापि विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो गरिष्ठो ब्रह्मवादिनाम् ॥१०
य आत्मव्यतिरेकेण द्वितीयं नैव पश्यति ।
ब्रह्मीभूय स एवं हि दक्षपक्ष उदाहृतः ॥११
विषयासक्तचित्तोहि यतिर्मोक्षं न विन्दति ।
यत्नेन विषयासक्तिं तस्माद्योगी विवर्जयेत् ॥१२
विषयेन्द्रियसंयोगः केचिद्योगं वदन्ति हि ।
अधर्मो धर्मरूपेण गृहीतस्तैरपण्डितैः ॥१३
मनसश्चात्मनश्चैव संयोगश्च तथापरे ।
उक्तनामधिका ह्येते केवलं योगवञ्चिताः ॥१४
वृत्तिहीनं मनः कृत्वा क्षेत्रज्ञं परमात्मनि ।
एकीकृत्य विमुच्येत योगोऽयं मुख्य उच्यते ॥१५
कषायमोहविक्षेपलज्जाशङ्कादिचेतसः ।
व्यापारास्तु समाख्यातास्तान् जित्वा वशमानयेत् ॥१६

कुटुम्बैः पञ्चभिर्ग्राम्यैः षष्ठस्तत्र महत्तरः ।
देवासुरमनुष्यैस्तु स जेतुं नैव शक्यते ॥१७
बलेन परराष्ट्राणि गृह्णन् शूरस्तु नोच्यते ।
जितो येनेन्द्रियग्रामः स शूरः कथ्यते बुधैः ॥१८
बहिर्मुखानि सर्व्वाणि कृत्वा चाभिमुखानि वै ।
सर्वञ्चैवेन्द्रियग्रामं मनश्चात्मनि योजयेत् ॥१९
सर्वभावविनिर्मुक्तः क्षेत्रज्ञं ब्रह्मणि न्यसेत् ।
एतद्ध्यानञ्च योगश्च शेषाः स्युर्ग्रन्थविस्तराः ॥२०
त्यक्त्वा विषयभोगांश्च मनोनिश्चलतां गतम् ।
आत्मशक्तिस्वरूपेण समाधिः परिकीर्त्तितः ॥२१
चतूर्णां सन्निकर्षेण पदं यत्तदशाश्वतम् ।
द्वयोस्तु सन्निकर्षेण शाश्वतं ध्रुवमक्षयम् ॥२२
यन्नास्ति सर्व्वलोकस्य तदस्तीति विरुद्ध्यते ।
कथ्यमानं तथान्यस्य हृदये नावतिष्ठते ॥२३
स्वसम्वेद्यं हि तद्ब्रह्म कुमारीमैथुनं यथा ।
अयोगी नैव जानाति जातान्धोहि यथा घटम् ॥२४
नित्याभ्यसनशीलस्य सुसंवेद्यं हि तद्भवेत् ।
तत्सूक्ष्मत्वादनिर्देश्यं परं ब्रह्म सनातनम् ॥२५
बुधस्त्वाभरणं भावं मनसालोचनं यथा ।
मन्यते स्त्री च मूर्खश्च तदेव बहुमन्यते ॥२६
सत्त्वोत्कटाः सुराश्चापि विषयेण वशीकृताः ।
प्रमादिभिः क्षुद्रसत्त्वैर्मानुषैरत्र का कथा ॥२७

तस्मात्त्यक्तकषायेण कर्त्तव्यं दण्डधारणम् ।
इतरस्तु न शक्नोति विषयैरभिभूयते ॥२८
न स्थिरं क्षणमप्येकमुदकं हि यथोर्मिभिः ।
वाताहतं तथा चित्तं तस्मात्तस्य न विश्वसेत् ॥२९
त्रिदण्डव्यपदेशेन जीवन्ति बहवो नराः ।
योहि ब्रह्म न जानाति न त्रिदण्डार्ह एव सः ॥३०
ब्रह्मचर्य्यं सदा रक्षेदष्टधा मैथुनं पृथक् ।
स्मरणं कीर्त्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥३१
सङ्कल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥३२
न ध्यातव्यं न वक्तव्यं न कर्त्तव्यं कदाचन ।
एतैः सर्वैः सुसम्पन्नो यतिर्भवति नेतरः ॥३३
पारिव्रज्यं गृहीत्वा च योधर्मे नावतिष्ठते ।
श्वपदेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत् ॥३४
एकोभिक्षुर्यथोक्तस्तु द्वौ चैव मिथुनं स्मृतम् ।
त्रयो ग्रामस्तथा ख्यात ऊर्द्ध्वन्तु नगरायते ॥३५
नगरं हि न कर्त्तव्यं ग्रामोवा मिथुनं तथा ।
एतत्रयं प्रकुर्वाणः स्वधर्माच्च्यवते यतिः ॥३६
राजवार्त्तादि तेषान्तु भिक्षावार्त्ता परस्परम् ।
स्नेहपैशून्यमात्सर्य्यं सन्निकर्षादसंशयम् ॥३७
लाभपूजानिमित्तं हि व्याख्यानं शिष्यसंग्रहः ।
एते चान्ये च बहवः प्रपञ्चाः कुतपस्विनाम् ॥३८

ध्यानं शौचं तथा भिक्षा नित्यमेकान्तशीलता ।
भिक्षोश्चत्वारि कर्माणि पञ्चमो नोपपद्यते ॥३६
तपोजपैः कृशीभूतोव्याधितोऽवसथावहः ।
वृद्धोग्रहगृहीतश्च यश्चान्योविकलेन्द्रियः ॥४०
नीरुजश्च युवा चैव भिक्षुर्नावसथावहः ।
स दूषयति तत्स्थानं बुधान् पीडयतीति च ॥४१
नीरुजश्च युवा चैव ब्रह्मचर्य्याद्विनश्यति ।
ब्रह्मचर्य्याद्विनष्टस्तु कुलञ्चैव तु नाशयेत् ॥४२
वसन्नावसथे भिक्षुर्मैथुनं यदि सेवते ।
तस्यावसथनाथस्य मूलान्यपि निकृन्तति ॥४३
आश्रमे तु यतिर्यस्य मुहूर्त्तमपि विश्रमेत् ।
किन्तस्यान्येन धर्मेण कृतकृत्योऽभिजायते ॥४४
समितं यद्गृहस्थेन पापमामरणान्तिकम् ।
स निर्दहति तत् सर्व्वमेकरात्रोषितोयतिः ॥४५
योगाश्रमपरिश्रान्तं यस्तु भोजयते यतिम् ।
निखिलं भोजितं तेन त्रैलोक्यं सचराचरम् ॥ ४६
यस्मिन् देशे वसेद्योगी ध्यानयोगविचक्षणः ।
सोऽपि देशो भवेत् पूतः किंपुनस्तस्य बान्धवाः ॥४७
द्वैतञ्चैव तथाद्वैत द्वैताद्वैतं तथैव च ।
न द्वैतं नापि चाद्वैतमित्येतत् परमार्थिकम् ॥४८
नाहं नैवान्यसम्बन्धो ब्रह्मभावेन भावितः ।
ईदृशायामवस्थायामवाप्यं परमं पदम् ॥४६

द्वैतपक्षाः समाख्याता येऽद्वैते तु व्यवस्थिताः ।
अद्वैतिनां प्रवक्ष्यामि यथा धर्मः सुनिश्चितः ॥५०
तत्रात्मव्यतिरेकेण द्वितीयं यदि पश्यति ।
ततः शास्त्राण्यधीयन्ते श्रूयन्ते ग्रन्थसञ्चयाः ॥५१
दक्षशास्त्रं यथा प्रोक्तमशेषाश्रममुत्तमम् ।
अधीयन्ते तु ये विप्रास्ते यान्त्यमरलोकताम् ॥५२
इदन्तु यः पठेद्भक्त्या शृणुयादधमोऽपिवा ।
स पुत्रपौत्रपशुमान् कीर्त्तिञ्च समवाप्नुयात् ॥५३
श्रावयित्वा त्विदं शास्त्रं श्राद्धकालेऽपिवा द्विजः ।
अक्षयं भवति श्राद्धं पितृभ्यश्चोपजायते ॥५४

इति दाक्षे धर्मशास्त्रे सप्तमोऽध्यायः ।

समाप्ता चेयं दक्षस्मृतिः ।

---

॥ शुभम् ॥

॥ अथ ॥

# *॥ आङ्गिरसस्मृतिः ॥*

—o:✲:o—

॥ श्रीगणेशायनमः ॥

अथादौ–प्रायश्चित्तविधानवर्णनम् ।

गृहाश्रमेषु धर्मेषु वर्णानामनुपूर्वशः ।
प्रायश्चित्त विधिं दृष्ट्वा अङ्गिरामुनिरब्रवीत् ॥१
अन्त्यानामपि सिद्धान्नं भक्षयित्वा द्विजातयः ।
चान्द्रं कृच्छ्रं तदर्द्धन्तु ब्रह्मक्षत्त्र विशां विदुः ॥२
रजकश्चर्मकारश्च नटोवुरुड़ एव च ।
कैवर्त्तभेदभिल्लाश्च सप्तैते चान्त्यजाः स्मृताः ॥३
अन्त्यजानां गृहे तोयं भाण्डे पर्य्युषितञ्च यत् ।
प्रायश्चित्तं यदा पीतं तदैव हि समाचरेत् ॥४
चाण्डालकूपभाण्डेषु त्वज्ञानात् पिवते यदि ।
प्रायश्चित्तं कथं तेषां वर्णे वर्णे विधीयते ॥५
चरेत् सान्तपनं विप्रः प्राजापत्यन्तु भूमिपः ।
तदर्द्धन्तु चरेद्वैश्यः पादं शूद्रेषु दापयेत् ॥६

अज्ञानात् पिबते तोयं ब्राह्मणस्त्वन्त्यजातिषु।
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति ॥७
विप्रो विप्रेण संस्पृष्ट उच्छिष्टेन कदाचन।
आचान्त एव शुध्येत अङ्गिरामुनिरब्रवीत् ॥८
क्षत्रियेण यदा स्पृष्ट उच्छिष्टेन कदाचन।
स्नानं जप्यन्तु कुर्वीत दिनस्यार्द्धेन शुध्यति ॥६
वैश्येन तु यदा स्पृष्टः शुना शूद्रेण वा द्विजः।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥१०
अनुच्छिष्टेन संस्पृष्टौ स्नानं येन विधीयते।
तेनैवोच्छिष्टसंस्पृष्टः प्राजापत्यं समाचरेत् ॥११
अत ऊर्द्ध्वं प्रवक्ष्यामि नीली वस्त्रस्य वै विधिम्।
स्त्रीणां क्रीड़ार्थसंयोगे शयनीये न दुष्यति ॥१२
पालने विक्रये चैव तद्वृत्तेरूपजीवने।
पतितस्तु भवेद्विप्रस्त्रिभिः कृच्छ्रैर्व्यपोहति ॥१३
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्।
वृथा तस्य महायज्ञा नीलीवस्त्रस्य धारणात् ॥१४
नीलीरक्तं यदा वस्त्रमज्ञानेन तु धारयेत्।
अहोरात्रोषितोभूत्वा पञ्चगव्येन शुध्यति ॥१५
नीलीदारु यदा भिन्द्याद्ब्राह्मणं वै प्रमादतः।
शोणितं दृश्यते यत्र द्विजश्चान्द्रायणञ्चरेत् ॥१६
नीलीवृक्षेण पक्वन्तु अन्नमश्नाति चेद्द्विजः।
आहार वमनं कृत्वा पञ्चगव्येन शुध्यति ॥१७

भक्षन् प्रमादतोनीलीं द्विजातिस्त्व समाहितः ।
त्रिषु वर्णेषु सामान्यं चान्द्रायणमिति स्थितम् ॥१८
नीलीरक्तेन वस्त्रेण यदन्नमुपनीयते ।
नोपतिष्ठति दातारं भोक्ता भुङ्क्ते तु किल्विषम् ॥१९
नीलीरक्तेन वस्त्रेण यत्पाके श्रपितं भवेत् ।
तेन भुक्तेन विप्राणां दिनमेकमभोजनम् ॥२०
मृते भर्त्तरि या नारी नीलीवस्त्रं प्रधारयेत् ।
भर्त्ता तु नरकं याति सा नारी तदनन्तरम् ॥२१
नीलया चोपहते क्षेत्रे शस्यं यत्तु प्ररोहति ।
अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणं चरेत् ॥२२
देवद्रोण्यां वृषोत्सर्गे यज्ञे दाने तथैव च ।
अत्र स्नानं न कर्त्तव्यं दूषिता च वसुन्धरा ॥२३
वापिता यत्र नीली स्यात्तावद्भूस्य शुचिर्भवेत् ।
यावद्द्वादशवर्षाणि अतऊर्द्ध्वं शुचिर्भवेत् ॥२४
भोजने चैव पाने च तथा चौषधभेषजैः ।
एवं म्रियन्ते या गावः पादमेकं समाचरेत् ॥२५
घण्टाभरणदोषेण यत्र गौर्विनिपीड्यते ।
चरेदर्द्धं व्रतं तेषां भूषणार्थं हि तत् कृतम् ॥२६
दमने दामने रोधे अवघाते च वैकृते ।
गवा प्रभवता घातैः पादोनं व्रतमाचरेत् ॥२७
अङ्गुष्ठपर्वमात्रस्तु बाहुमात्रः प्रमाणतः ।
सपल्लवश्च साग्रश्च दण्डइत्यभिधीयते ॥२८

दण्डादुक्ताद्यदान्येन पुरुषाः प्रहरन्ति गाम् ।
द्विगुणं गोव्रतं तेषां प्रायश्चित्तं विशोधनम् ॥२६
शृङ्गभङ्गे त्वस्थिभङ्गे चर्मनिर्म्मोचने तथा ।
दशरात्रं चरेत् कृच्छ्रं यावत् स्वस्थोभवेत्तदा ॥३०
गोमूत्रेण तु संमिश्रं यावकश्चोपजायते ।
एतदेव हितं कृच्छ्रमिदमाङ्गिरसं मतम् ॥३१
असमर्थस्य वालस्य पिता वा यदि वा गुरुः ।
यमुद्दिश्य चरेद्धर्मं पापं तस्य न विद्यते ॥३२
अशीतिर्यस्य वर्षाणि वालोवाप्यूनषोड़शः ।
प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च ॥३३
मूर्च्छिते पतिते चापि गवि यष्टिप्रहारिते ।
गायत्र्यष्टसहस्रन्तु प्रायश्चित्तं विशोधनम् ॥३४
स्नात्वा रजस्वला चैव चतुर्थेऽह्नि विशुध्यति ।
कुर्य्याद्रजसि निवृत्तेऽनिवृत्ते न कथञ्चन ॥३५
रोगेण यद्रजः स्त्रीणामत्यर्थं हि प्रवर्त्तते ।
अशुच्यन्ता न तेन स्युस्तासां वैकारिकं हि तत् ॥३६
साध्वाचारा न तावत् स्याद्रजो यावत् प्रवर्त्तते ।
वृत्ते रजसि गम्या स्त्री गृहकर्मणि चैन्द्रिये ॥३७
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥३८
रजस्वला यदा स्पृष्टा शुना शूद्रेण चैव हि ।
उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥३९

द्वावेतावशुची स्यातां दम्पती शयनङ्गतौ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥४०
गण्डूषं पादशौचञ्च न कुर्य्यात् कांस्यभाजने।
भस्मना शुध्यते कांस्यं ताम्रमम्लेन शुध्यति ॥४१
रजसा शुध्यते नारी नदी वेगेन शुध्यति।
भूमौ निःक्षिप्य षण्मासमत्यन्तोपहतं शुचि ॥४२
गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि तु।
भस्मना दशभिः शुद्ध्येत् काकेनोपहते तथा ॥४३
शौचं सौवर्णरूप्याणां वायुनार्केन्दुरश्मिभिः ॥४४
रेतःस्पृष्टं शवस्पृष्टमाविकञ्च न दुष्यति।
अद्भिर्मृदा च तन्मात्रं प्रक्षाल्य च विशुध्यति ॥४५
शुष्कमन्नमविप्रस्य भुक्त्वा सप्ताहमृच्छति।
अन्नं व्यञ्जनसंयुक्तमर्द्धमासेन जीर्य्यति ॥४६
पयोदधि च मासेन षण्मासेन घृतं तथा।
तैलं सवत्सरेणैव कोष्ठे जीर्य्यति वा नवा ॥४७
यो भुङ्क्ते हि च शूद्रान्नं मासमेकं निरन्तरम्।
इह जन्मनि शूद्रत्वं मृतः श्वा चाभिजायते ॥४८
शूद्रान्नं शूद्रसम्पर्कः शूद्रेण च सहासनम्।
शूद्राज्ज्ञानगमः कश्चिज्ज्वलन्तमपि पातयेत् ॥४९
अप्रणामे तु शूद्रेऽपि स्वस्ति यो वदति द्विजः।
शूद्रोऽपि नरकं याति ब्राह्मणोऽपि तथैव च ॥५०

दशाहाच्छुध्यते विप्रो द्वादशाहेन भूमिपः ।
पाक्षिकं वैश्य एवाह शूद्रोमासेन शुध्यति ॥५१
अग्निहोत्री च यो विप्रः शूद्रान्नं चैव भोजयेत् ।
पञ्च तस्य प्रणश्यन्ति आत्मा वेदास्त्रयोऽग्नयः ॥५२
शूद्रान्नेन तु भुक्तेन यो द्विजो जनयेत्सुतान् ।
यस्यान्नं तस्य ते पुत्रा अन्नाच्छुक्रं प्रवर्त्तते ॥५३
शूद्रेण स्पृष्टमुच्छिष्टं प्रमादादथ पाणिना ।
तद्द्विजेभ्यो न दातव्यमापस्तम्बोऽब्रवीन्मुनिः ॥५४
ब्राह्मणस्य सदा भुङ्क्ते क्षत्रियस्य च पर्वसु ।
वैश्येष्वापत्सु भुञ्जीत न शूद्रेऽपि कदाचन ॥५५
ब्राह्मणान्ने दरिद्रत्वं क्षत्त्रियान्ने पशुस्तथा ।
वैश्यान्नेन तु शूद्रत्वं शूद्रान्ने नरकं ध्रुवम् ॥५६
अमृतं ब्राह्मणस्यान्नं क्षत्त्रियान्नं पयः स्मृतम् ।
वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं ध्रुवम् ॥५७
दुष्कृतं हि मनुष्याणामन्नमाश्रित्य तिष्ठति ।
यो यस्यान्नं समश्नाति स तस्याश्नाति किल्विषम् ॥५८
सूतकेषु यदा विप्रो ब्रह्मचारी जितेन्द्रियः ।
पिवेत् पानीयमज्ञानाद्भुङ्क्ते (अन्नं) भक्तमथापिवा ॥५९
उत्तार्य्याचम्य उदकमवतीर्य्य उपस्पृशेत् ।
एवं हि समुदाचारो वरुणेनाभिमन्त्रितः ॥६०
अग्न्यागारे गवां गोष्ठे देवब्राह्मण सन्निधौ ।
आहारे जपकाले च पादुकानां विसर्जनम् ॥६१

पादुकासन्नमारूढोगेहात् पञ्चगृहं व्रजेत् ।
छेदयेत्तस्य पादौ तु धार्मिकः पृथिवीपतिः ॥६२
अग्निहोत्री तपस्वी च श्रोत्रियो वेदपारगः ।
एते वै पादुकैर्यान्ति शेषान्दण्डेन ताड़येत् ॥६३
जन्मप्रभृतिसंस्कारे चूड़ान्ते भोजनं नवम् ।
असपिण्डेन भोक्तव्यं चूड़स्यान्ते विशेषतः ॥६४
याचकान्नं नवश्राद्धमपि सूतकभोजनम् ।
नारीप्रथमगर्भेषु भुक्त्वा चान्द्रायणं चरेत् ॥६५
अन्यदत्ता तु या कन्या पुनरन्यस्य दीयते ।
तस्याश्चान्नं न भोक्तव्यं पुनर्भूःसा प्रगीयते ॥६६
पूर्वश्च स्रावितोयश्च गर्भोयश्चाप्यसंस्कृतः ।
द्वितीये गर्भसंस्कारस्तेन शुद्धिर्विधीयते ॥६७
राजाद्यैर्दशभिर्मासैर्यावत्तिष्ठति गुर्विणी ।
तावद्रक्षा विधातव्या पुनरन्योविधीयते ॥६८
भर्तृशासनमुल्लङ्घ्य या च स्त्री विप्रवर्त्तते ।
तस्याश्चैव न भोक्तव्यं विज्ञेया कामचारिणी ॥६९
अनपत्या तु या नारी नाश्नीयात्तद्गृहेऽपि वै ।
अथ भुङ्क्ते तु यो मोहात् पूयसं नरकं व्रजेत् ॥७०
स्त्रियाधनन्तु ये मोहादुपजीवन्ति वान्धवाः ।
स्त्रिया यानानि वासांसि ते पापा यान्त्यधोगतिम् ॥७१
राजान्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम् ।
सूतकेषु च यो भुङ्क्ते स भुङ्क्ते पृथिवी मलम् ॥७२

इत्यङ्गिरसा महर्षिणा प्रणीतं धर्मशास्त्रं समाप्तम् ॥

समाप्ताचेयं आङ्गिरसस्मृतिः ।

ॐ तत्सत् ।

॥ अथ ॥

# —॥ शातातपस्मृतिः ॥—

॥ श्रीगणेशायनमः ॥

अथाऽकृतप्रायश्चित्तवर्णनम् ।

प्रथमोऽध्यायः ।

प्रायश्चित्तविहीनानां महापातकिनां नृणाम् ।
नरकान्ते भवेज्जन्म चिह्नाङ्कितशरीरिणाम् ॥१
प्रतिजन्म भवेत्तेषां चिह्नं तत्पापसूचितम् ।
प्रायश्चित्ते कृते याति पश्चात्तापवतां पुनः ॥२
महापातकजं चिह्नं सप्तजन्मनि जायते ।
उपपापोद्भवं पञ्च त्रीणि पापसमुद्भवम् ॥३
दुष्कर्मजा नृणां रोगा यान्ति चोपक्रमैः शमम् ।
जपैः सुरार्चनैर्होमैर्दानैस्तेषां शमोभवेत् ॥४

पूर्वजन्मकृतं पापं नरकस्य परिक्षये ।
बाधते व्याधिरूपेण तस्य जप्यादिभिः शमः ॥५
कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा ।
मूत्रकृच्छ्राश्मरीकासा अतीसारभगन्दरौ ॥६
दुष्टव्रणं गण्डमालां पक्षाघातोऽक्षिनाशनम् ।
इत्येवमादयो रोगा महापापोद्भवाः स्मृताः ॥७
जलोदरं यकृत् प्लीहा शूलरोगव्रणानि च ।
श्वासाजीर्णज्वरच्छर्दिभ्रममोहगलग्रहाः ।
रक्तार्बुद विसर्पाद्या उपपापोद्भवा गदाः ॥८
दण्डापतानकश्वित्रवपुः कम्पविचर्चिकाः ।
वल्मीकपुण्डरीकाद्या रोगाः पापसमुद्भवाः ॥९
अर्शआद्या नृणां रोगा अतिपापाद्भवन्ति हि ।
अन्ये च बहवो रोगा जायन्ते वर्णसङ्कराः ॥१०
उच्यन्ते च निदानानि प्रायश्चित्तानि वै क्रमात् ।
महापापेषु सर्वं स्यात्तदर्द्धमुपपातके ॥११
दद्यात् पापेषु षष्ठांशं कल्प्यं व्याधिबलाबलम् ।
अथ साधारणं तेषु गोदानादिषु कथ्यते ॥१२
गोदाने वत्सयुक्ता गौः सुशीला च पयस्विनी ॥१३
वृषदाने शुभोऽनड्वान् शुक्लाम्बरसकाञ्चनः ।
निवर्तनानि भूदाने दश दद्याद्द्विजातये ॥१४
दशहस्तेन दण्डेन त्रिंशद्दण्डं निवर्तनम् ।
दश तान्येव गोचर्म दत्वा स्वर्गे महीयते ॥१५

सुवर्णशतनिष्कन्तु तदर्द्धार्द्ध प्रमाणतः।
अश्वदाने मृदु श्लक्ष्णमश्वं सोपस्करं दिशेत् ॥१६
महिषीं माहिषे दाने दद्यात् स्वर्णा (ज्वरा) युधान्वितम्।
दद्याद्गजं महादाने सुवर्णफलसंयुतम् ॥१७
लक्षसंख्यार्हणं पुष्पं प्रदद्याद्देवतार्च्चने।
दद्याद्द्विजसहस्राय मिष्टान्नं द्विजभोजने ॥१८
रुद्रं जपेल्लक्षपुष्पैः पूययित्वा च त्र्यम्बकम्।
एकादश जपेद्रुद्रान् दशांशं गुग्गुलैर्घृतैः ॥१६
हुत्वाभिषेचनं कुर्य्यान्मन्त्रैर्वरुणदैवतैः।
शान्तिके गणशान्तिश्च ग्रहशान्तिकपूर्वकम् ॥२०
धान्यदाने शुभं धान्यं खारी यष्टिमितं स्मृतम्।
वस्त्रदाने पट्टवस्त्रद्वयं कर्पूरसंयुतम् ॥२१
दशपञ्चाष्टचतुर उपवेश्य द्विजान् शुभान्।
विधाय वैष्णवीं पूजां सङ्कल्प्य निजकाम्यया ॥२२
धेनुं दद्याद्द्विजातिभ्योदक्षिणाश्चापि शक्तितः।
अलङ्कृत्य यथाशक्ति वस्त्रालङ्करणैर्द्विजान् ॥२३
यान्दण्डप्रमाणेन प्रायश्चित्तं यथोदितम्।
तेषामनुज्ञया कृत्वा प्रायश्चित्तं यथाविधि ॥२४
पुनस्तान् परिपूर्णार्थानर्चयेद्विधिवद्द्विजान्।
सन्तुष्टा ब्राह्मणा दद्युरनुज्ञां व्रतकारिणे ॥२५
जपच्छिद्रं तपश्छिद्रं यच्छिद्रं यज्ञकर्मणि।
सर्वं भवति निच्छिद्रं यस्य चेच्छन्ति ब्राह्मणाः ॥२६

ब्राह्मणा यानि भाषन्ते मन्यन्ते तानि देवताः।
सर्वदेवमया विप्रा न तद्वचनमन्यथा ॥२७
उपवासो व्रतञ्चैव स्नानं तीर्थफलं तपः।
विप्रैः सम्पादितं सर्वं सम्पन्नं तस्य तत्फलम् ॥२८
सम्पन्नमिति यद्वाक्यं वदन्ति क्षितिदेवताः।
प्रणम्य शिरसा धार्य्यमग्निष्टोमफलं लभेत ॥२९
ब्राह्मणा जङ्गमं तीर्थं निर्जलं सार्वकामिकम्।
तेषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥३०
तेभ्योऽनुज्ञामभिप्राप्य प्रगृह्य च तथाशिषः।
भोजयित्वा द्विजान् शक्त्या भुञ्जीत सह बन्धुभिः ॥३१

इति शातातपीये कर्मविपाके साधारणविधिः प्रथमोऽध्यायः।



॥ द्वितीयोऽध्यायः ॥

अथ कुष्ठनिवारणप्रयोगवर्णनम्।

ब्रह्महा नरकस्यान्ते पाण्डुकुष्ठी प्रजायते।
प्रायश्चित्तं प्रकुर्वीत स तत्पातकशान्तये ॥१
चत्वारः कलशाः कार्य्याः पञ्चरत्नसमन्विताः।
पञ्चपल्लवसंयुक्ताः सितवस्त्रेण संयुताः ॥२
अश्वस्थानादिमृद्युक्तास्तीर्थोदकसुपूरिताः।
कषायपञ्चकोपेता नानाविधफलान्विताः ॥३

सर्वौषधिसमायुक्ताः स्थाप्याः प्रतिदिशं द्विजैः।
रौप्यमष्टदलं पद्मं मध्यकुम्भोपरि न्यसेत् ॥४
तस्योपरि न्यसेद्देवं ब्रह्माणञ्च चतुर्मुखम्।
पलार्द्धार्द्धप्रमाणेन सुवर्णेन विनिर्मितम् ॥५
अर्चेत् पुरुषसूक्तेन त्रिकालं प्रतिवासरम्।
यजमानः शुभैर्गन्धैः पुष्पैर्धूपैर्यथाविधि ॥६
पूर्वादिकुम्भेषु ततो ब्राह्मणा ब्रह्मचारिणः।
पठेयुः स्वस्ववेदांस्ते ऋग्वेदप्रभृतीन् शनैः ॥७
दशांशेन ततो होमो ग्रहशान्तिपुरःसरः।
मध्यकुण्डे विधातव्यो घृताक्तैस्तिलहेमभिः ॥८
द्वादशाहमिदं कर्म समाप्य द्विजपुङ्गवः।
तत्र पीठे यजमानमभिषिञ्चेद्यथाविधि ॥९
ततोदद्याद्यथाशक्ति गोभूहेमतिलादिकम्।
ब्राह्मणेभ्यस्तथा देयमाचार्य्याय निवेदयेत् ॥१०
आदित्या वसवो रुद्रा विश्वे देवा मरुद्गणाः।
प्रीताः सर्वे व्यपोहन्तु मम पापं सुदारुणम् ॥११
इत्युदीर्य्य मुहुर्भक्त्या तमाचार्य्यं क्षमापयेत्।
एवं विधाने विहिते श्वेतकुष्ठी विशुध्यति ॥१२
कुष्ठी गोवधकारी स्यान्नरकान्तेऽस्य निष्कृतिः।
स्थापयेद्घटमेकन्तु पूर्वोक्तद्रव्यसंयुतम् ॥१३
रक्तचन्दनलिप्ताङ्गं रक्तपुष्पाम्बरान्वितम्।
रक्तकुम्भन्तु तं कृत्वा स्थापयेद्दक्षिणां दिशम् ॥१४

ताम्रपात्रं न्यसेत्तत्र तिलचूर्णेन पूरितम् ।
तस्योपरि न्यसेद्देवं हेमनिष्कमयं यमम् ॥१५
यजेत् पुरुषसूक्तेन पापं मे शाम्यतामिति ।
सामपारायणं कुर्य्यात् कलशे तत्र सामवित् ॥१६
दशांशं सर्षपैर्हुत्वा पावमान्यभिषेचने ।
विहिते धर्मराजानमाचार्य्याय निवेदयेत् ॥१७
यमोऽपि महिषारूढो दण्डपाणिर्भयावहः ।
दक्षिणाशापतिर्देवोमम पापं व्यपोहतु ॥१८
इत्युच्चार्य्य विसृज्यैनं मासं मद्भक्तिमाचरेत् ।
ब्रह्मगोबधयोरेषा प्रायश्चित्तेन निष्कृतिः ॥१९
पितृहा चेतनाहीनो मातृहान्धः प्रजायते ।
नरकान्ते प्रकुर्वीत प्रायश्चित्तं यथाविधि ॥२०
प्राजापत्यानि कुर्वीत त्रिंशच्चैव विधानतः ।
व्रतान्ते कारयेन्नावं सौवर्णपलसम्मिताम् ॥२१
कुम्भं रौप्यमयञ्चैव ताम्रपात्राणि पूर्ववत् ।
निष्कहेम्ना तु कर्त्तव्यो देवः श्रीवत्सलाञ्छनः ॥२२
पट्टवस्त्रेण संवेष्ट्य पूजयेत्तं विधानतः ।
नावं द्विजाय तं दद्यात् सर्वोपस्करसंयुताम् ॥२३
वासुदेव ! जगन्नाथ ! सर्वभूताशयस्थित ! ।
पातकार्णवमग्नं मां तारय प्रणतार्त्तिहृत् ! ॥२४
इत्युदीर्य्य प्रणम्याथ ब्राह्मणाय विसर्जयेत् ।
अन्येभ्योऽपि यथाशक्ति विप्रेभ्योदक्षिणां ददेत् ॥२५

स्वसृघाती तु बधिरो नरकान्ते प्रजायते ।
मूको भ्रातृबधे चैव तस्येयं निष्कृतिः स्मृता ॥२६
सोऽपि पापविशुद्ध्यर्थं चरेच्चान्द्रायणव्रतम् ।
व्रतान्ते पुस्तकं दद्यात् सुवर्णफलसंयुतम् ॥२७
इमं मन्त्रं समुच्चार्य्य ब्रह्माणीं तां विसर्जयेत् ।
सरस्वति ! जगन्मातः ! शब्दब्रह्माधिदेवते ! ॥२८
दुष्कर्मकरणात् पापात् पाहि मां परमेश्वरि ! ।
बालघाती च पुरुषो मृतवत्सः प्रजायते ॥२६
ब्राह्मणोद्वाहनञ्चैव कर्त्तव्यं तेन शुद्धये ।
श्रवणं हरिवंशस्य कर्त्तव्यञ्च यथाविधि ॥३०
महारुद्रपञ्चैव कार्यञ्च यथाविधि ।
षड़ङ्गैकादशैरुद्रैरुद्रः समभिधीयते ॥३१
रुद्रैस्तथैकादशभिर्महारुद्रः प्रकीर्त्तितः ।
एकादशभिरेतैस्तु अतिरुद्रश्च कथ्यते ॥३२
जुहुयाच्च दशांशेन दूर्वयायुतसंख्यया ।
एकादश स्वर्णनिष्काः प्रदातव्याः सदक्षिणाः ॥३३
पलान्येकादश तथा दद्याद्द्विजानुसारतः ।
अन्येभ्योऽपि यथाशक्ति द्विजेभ्योदक्षिणांदिशेत् ॥३४
स्नापयेद्दम्पतीः पश्चान्मन्त्रैर्वरुणदैवतैः ।
आचार्य्याय प्रदेयानि वस्त्रालङ्करणानि च ॥३५
गोत्रहा पुरुषः कुष्ठी निर्वंशश्चोपजायते ।
स एव पापविशुद्ध्यर्थं प्राजापत्यशतञ्चरेत् ॥३६

व्रतान्ते मेदिनीं दत्वा शृणुयादथ भारतम्।
स्त्रीहन्ता चातिसारी स्यादश्वत्थान् रोपयेद्दश ॥३७
दद्याच्च शर्कराधेनुं भोजयेच्च शतं द्विजान्।
राजहा क्षयरोगी स्यादेषा तस्य च निष्कृतिः ॥३८
गोभूहिरण्यमिष्टान्नंजलवस्त्रप्रदानतः।
घृतधेनुप्रदानेन तिलधेनुप्रदानतः ॥३९
इत्यादिना क्रमेणैव क्षयरोगः प्रशाम्यति।
रक्तार्बुदी वैश्यहन्ता जायते स च मानवः ॥४०
प्राजापत्यानि चत्वारि सप्त धान्यानि चोत्सृजेत्।
दण्डापतानकयुतः शूद्रहन्ता भवेन्नरः ॥४१
प्राजापत्यं सकृच्चैवं दद्याद्धेनुं सदक्षिणाम्।
कारुणाश्च बधे चैव रूक्षभावः प्रजायते ॥४२
तेन तत्पापशुद्ध्यर्थं दातव्यो वृषभः सितः।
सर्वकार्य्येष्वसिद्धार्थो गजघाती भवेन्नरः ॥४३
प्रासादं कारयित्वा तु गणेशप्रतिमां न्यसेत्।
गणनाथस्य मन्त्रस्तु मन्त्री लक्षमितं जपेत् ॥४४
कुलत्थशाकैः पूपैश्च गणशान्तिपुरःसरम्।
उष्ट्रे विनिहते चैव जायते विकृतस्वरः ॥४५
स तत्पापविशुद्ध्यर्थं दद्यात् कर्पूरकं फलम् ॥४६
अश्वे विनिहते चैव वक्रतुण्डः प्रजायते।
शतं पलानि दद्याच्च चन्दनान्यघनुत्तये ॥४७

महिषीघातने चैव कृष्णगुल्मः प्रजायते ।
खरे विनिहते चैव खररोमा प्रजायते ॥४८
निष्कत्रयस्य प्रकृतिं सम्प्रदद्याद्धिरण्मयीम् ।
तरक्षौ निहते चैव जायते केकरेक्षण ।
दद्याद्रत्नमयीं धेनुं स तत्पातकशान्तये ॥४६
शूकरे निहते चैव दन्तुरो जायते नरः ।
स दद्यात्तु विशुद्ध्यर्थं घृतकुम्भं सदक्षिणम् ॥५०
हरिणे निहते खञ्जः शृगाले तु विपादकः ।
अश्वस्तेन प्रदातव्यः सौवर्णपलनिर्मितः ॥५१
अजाभिघातने चैव अधिकाङ्गः प्रजायते ।
अजा तेन प्रदातव्या विचित्रवस्त्रसंयुता ॥५२
उरभ्रे निहते चैव पाण्डुरोगः प्रजायते ।
कस्तूरिकापलं दद्याद्ब्राह्मणाय विशुद्धये ॥५३
मार्जारे निहते चैव पीतपाणिः प्रजायते ।
पारावतं स सौवर्णं प्रदद्यान्निष्कमात्रकम् ॥५४
शुकशारिकयोर्घाते नरः स्खलितवाग्भवेत् ।
सच्छास्त्रपुस्तकं दद्यात् स विप्राय सदक्षिणम् ॥५५
वकघाती दीर्घनसो दद्याद्गां धवलप्रभाम् ।
काकघाती कर्णहीनो दद्याद्गामसितप्रभाम् ॥५६
हिंसायां निष्कृतिरियं ब्राह्मणे समुदाहृता ।
तद्वद्र्द्धप्रमाणेन क्षत्रियादिष्वनुक्रमात् ॥५७
इति शातातपीये कर्मविपाके हिंसाप्रायश्चित्तविधिर्नाम
द्वितीयोऽध्यायः ।

## ॥ तृतीयोऽध्यायः ॥

### अथ प्रकीर्णरोगाणांप्रायश्चित्तम् ।

सुरापः श्यावदन्तः स्यात् प्राजापत्यन्तरन्तथा ।
शर्करायास्तुलाः सप्त दद्यात् पापविशुद्धये ॥१

जपित्वा तु महारुद्रं दशांशं जुहुयात्तिलैः ।
ततोऽभिषेकः कर्त्तव्यो मन्त्रैर्वरुणदैवतैः ॥२

मद्यपो रक्तपित्ती स्यात्स दद्यात् सर्पिषोघटम् ।
मधुनोऽर्द्धघटञ्चैव सहिरण्यं विशुद्धये ॥३

अभक्ष्यभक्षणे चैव जायते कृमिकोदरः ।
यथावत्तेन शुद्ध्यर्थमुपोष्यं भीष्मपञ्चकम् ॥४

उदक्यावीक्षितं भुक्त्वा जायते कृमिलोदरः ।
गोमूत्रयावकाहारस्त्रिरात्रेणैव शुद्ध्यति ॥५

भुक्त्वा चास्पृश्य संस्पृष्टं जायते कृमिलोदरः ।
त्रिरात्रं समुपोष्याथ स तत्पापात् प्रमुच्यते ॥६

परान्नविघ्नकरणादजीर्णमभिजायते ।
लक्षहोमं स कुर्वीत प्रायश्चित्तं यथाविधि ॥७

मन्दोदराग्निर्भवति सति द्रव्ये कदन्नदः ।
प्राजापत्यत्रयं कुर्य्याद्भोजयेच्च शतं द्विजान् ॥८

विषदः स्याच्छर्दिरोगी दद्याद्दश पयस्विनीः ।
मार्गहा पादरोगी स्यात् सोऽश्वदानं समाचरेत् ॥९

पिशुनो नरस्यान्ते जायते श्वासकासवान्।
घृतं तेन प्रदातव्यं सहस्रपलसम्मितम् ॥१०
धूर्त्तोऽपस्माररोगी स्यात् स तत्पापविशुद्धये।
ब्रह्मकूर्चमयीं धेनुं दद्याद्वाश्च सदक्षिणाम् ॥११
शूली परोपतापेन जायते तत्प्रमोचने।
सोऽन्नदानं प्रकुर्वीत॰ तथा रुद्रं जपेन्नरः ॥१२
दावाग्निदायकश्चैव रक्तातिसारवान् भवेत्।
तेनोदपानं कर्त्तव्यं रोपणीयस्तथा वटः ॥१३
सुरालये जले वापि शकृण्मूत्रं करोति यः।
गुदरोगो भवेत्तस्य पापरूपः सुदारुणः ॥१४
मासं सुरार्च्चनेनैवं गोदानद्वितयेन तु।
प्राजापत्येन चैकेन शाम्यन्ति गुदजा रुजः ॥१५
गर्भपातनजा रोगा यकृत्प्लीहजलोदराः।
तेषां प्रशमनार्थाय प्रायश्चित्तमिदं स्मृतम् ॥१६
एतेषु दद्याद्विप्राय जलधेनुं विधानतः।
सुवर्णरूप्यताम्राणां पलत्रयसमन्विताम् ॥१७
प्रतिमाभङ्गकारी च अप्रतिष्ठः प्रजायते।
सम्वत्सरत्रयं सिञ्चेदश्वत्थं प्रतिवासरम् ॥१८
उद्वाहयेत्तमश्वत्थं स्वगृह्योक्तविधानतः।
तत्र संस्थापयेद्देवं विघ्नराजं सुपूजितम् ॥१९
दुष्टवादी खण्डितः स्यात् सवै दद्याद्द्विजातये।
रूप्यं पलद्वयं दुग्धं घटद्वयसमन्वितम् ॥२०

खल्लीटः परनिन्दावान् धेनुं दद्यात् सकाञ्चनाम् ।
परोपहासकृत् काणः स गां दद्यात् समौक्तिकाम् ॥२१
सभायां पक्षपाती च जायते पक्षघातवान् ।
निष्कत्रयमितं हेम स दद्यात् सत्यवर्त्तिनाम् ॥२२

इति शातातपीये कर्मविपाके प्रकीर्णप्रायश्चित्तं नाम तृतीयोऽध्यायः ।

—❀❀—

## ॥ चतुर्थोऽध्यायः ॥

### अथ स्तेयप्रायश्चित्तम् ।

कुलघ्नो नरकस्यान्ते जायते विप्रहेमहृत् ।
स तु स्वर्णशतं दद्यात् कृत्वा चान्द्रायणत्रयम् ॥१
औडुम्बरी ताम्रचौरो नरकान्ते प्रजायते ।
प्राजापत्यं स कृत्वात्र ताम्रं पलशतं दिशेत् ॥२
कांस्यहारी च भवति पुण्डरीकसमन्वितः ।
कांस्यं पलशतं दद्यादलङ्कृत्य द्विजातये ॥३
रीतिहृत् पिङ्गलाक्षः स्यादुपोष्य हरिवासरम् ।
रीतिं पलशतं दद्यादलङ्कृत्य द्विजं शुभम् ॥४
मुक्ताहारी च पुरुषो जायते पिङ्गमूर्द्धजः ।
मुक्ताफलशतं दद्यादुपोष्य स विधानतः ॥५
त्रपुहारी च पुरुषो जायते नेत्ररोगवान् ।
उपोष्य दिवसं सोऽपि दद्यात् पलशतन्त्रपु ॥६

सीसहारी च पुरुषो जायते शीर्षरोगवान् ।
उपोष्य दिवसं दद्याद्घृतधेनुं विधानत ॥७
दुग्धहारी च पुरुषो जायते बहुमूत्रकः ।
स दद्याद्दुग्धधेनुञ्च ब्राह्मणाय यथाविधि ॥८
दधिचौर्य्येण पुरुषो जायते मदवान् यतः ।
दधिधेनुः प्रदातव्या तेन विप्राय शुद्धये ॥६
मधुचौरस्तु पुरुषो जायते नेत्ररोगवान् ।
स दद्यान्मधुधेनुञ्च समुपोष्य द्विजातये ॥१०
इक्षोर्विकारहारी च भवेदुदरगुल्मवान् ।
गुडधेनुः प्रदातव्या तेन तद्दोषशान्तये ॥११
लोहहारी च पुरुषः कर्बूराङ्गः प्रजायते ।
लोहं पलशतं दद्यादुपोष्य स तु वासरम् ॥१२
तैलचौरस्तु पुरुषो भवेत् कण्ड्वादिपीडितः ।
उपोष्य स तु विप्राय दद्यात्तैलघटद्वयम् ॥१३
आमान्नहरणाच्चैव दन्तहीनः प्रजायते ।
स दद्यादश्विनौ हेमनिष्कद्वयविनिर्मितौ ॥१४
पक्वान्नहरणाच्चैव जिह्वारोगः प्रजायते ।
गायत्र्याः स जपेल्लक्षं दशांशं जुहुया(यवैः)त्तिलैः ॥१५
फलहारी च पुरुषो जायते व्रणिताङ्गुलिः ।
नानाफलानामयुतं स दद्याच्च द्विजन्मने ॥१६
ताम्बूलहरणाच्चैव श्वेतौष्ठः सम्प्रजायते ।
सदक्षिणं प्रदद्याच्च विद्रुमस्य द्वयं वरम् ॥१७

शाकहारी च पुरुषो जायते नीललोचनः ।
ब्राह्मणाय प्रदद्याद्वै महानीलमणिद्वयम् ॥१८
कन्दमूलस्य हरणाद्ध्रस्वपाणिः प्रजायते ।
देवतायतनं कार्य्यमुद्यानं तेन शक्तित ॥१९
सौगन्धिकस्य हरणाद्दुर्गन्धाङ्गः प्रजायते ।
स लक्षमेकं पद्मानां जुहुयाज्जातवेदसि ॥२०
दारु(क्षीर)हारी च पुरुषः छिन्नपाणिः प्रजायते ।
स दद्याद्विदुषे शुद्धौ काश्मीरजपलद्वयम् ॥२१
विद्यपुस्तकहारी च किल मूकः प्रजायते ।
न्यायेतिहासं दद्यात् स ब्राह्मणाय सदक्षिणाम् ॥२२
वस्त्रहारी भवेत् कुष्ठी सम्प्रदद्यात्प्रजापतिम् ।
हेमनिष्कमितञ्चैव वस्त्रयुग्मं द्विजातये ॥२३
ऊर्णाहारी लोमशः स्यात् स दद्यात् कम्बलान्वितम् ।
स्वर्णनिष्कमितं हेमवह्निं दद्याद्द्विजातये ॥२४
पट्टसूत्रस्य हरणान्निर्लोमा जायते नरः ।
तेन धेनुः प्रदातव्या विशुद्ध्यर्थं द्विजन्मने ॥२५
औषधस्यापहरणे सूर्य्यावर्तः प्रजायते ।
सूर्य्यायार्घः प्रदातव्यो मासं देयञ्च काञ्चनम् ॥२६
रक्तवस्त्रप्रवालादिहारी स्याद्रक्तवातवान् ।
सवस्त्रां महिषीं दद्यान्मणिरागसमन्विताम् ॥२७
विप्ररत्नापहारी चाप्यनपत्यः प्रजायते ।
तेन कार्य्यं विशुद्ध्यर्थं महारुद्रजपादिकम् ॥२८

मृतवत्सोदितः सर्वोविधिरत्र विधीयते।
दशांशहोमः कर्तव्यः पलाशेन यथाविधि ॥२९
देवस्य हरणाच्चैव जायते विविधो ज्वरः।
ज्वरोमहाज्वरश्चैव रौद्रो वैष्णव एव च ॥३०
ज्वरे रौद्रं जपेत् कर्णं महारुद्रं महाज्वरे।
अतिरौद्रं जपेद्रौद्रे वैष्णवे तद्द्वयं जपेत् ॥३१
नानाविधद्रव्यचौरो जायते ग्रहिणीयुतः।
तेनान्नोदकवस्त्राणि हेम देयञ्च शक्तितः ॥३२

इति शातातपीये कर्मविपाके स्तेयप्रायश्चित्तं नाम चतुर्थोऽध्यायः।

—:00:—

## ॥ पञ्चमोऽध्यायः ॥

### अथ अगम्यागमनप्रायश्चित्तम्।

मातृगामी भवेद्यस्तु लिङ्गं तस्य विनश्यति।
चाण्डालीगमने चैव हीनकोषः प्रजायते ॥१
तस्य प्रतिक्रियां कर्तुं कुम्भमुत्तरतोन्यसेत्।
कृष्णवस्त्रसमाच्छन्नं कृष्णमाल्यविभूषितम् ॥२
तस्योपरि न्यसेद्देवं कांस्यपात्रे धनेश्वरम्।
सुवर्णनिष्कषट्केन निर्मितं नरवाहनम् ॥३
यजेत् पुरुषसूक्तेन धनदं विश्वरूपिणम्।
अथर्ववेदविद्विप्रो ह्याथर्वणं समाचरेत् ॥४

सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसङ्ख्यया।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन् ॥५
निधीनामधिपो देवः शङ्करस्य प्रियः सखा।
सौम्याशाधिपतिः श्रीमान् मम पापं व्यपोहतु ॥६
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि।
दद्यादेवं हीनकोषे लिङ्गनाशे विशुद्धये ॥७
गुरुजायाभिगमनान्मूत्रकृच्छ्रः प्रजायते।
तेनापि निष्कृतिः कार्य्या शास्त्रदृष्टेन कर्मणा ॥८
स्थापयेत् कुम्भमेकन्तु पश्चिमायां शुभे दिने।
नीलवस्त्रसमाच्छन्नं नीलमाल्यविभूषितम् ॥६
तस्योपरि न्यसेद्देवं ताम्रपात्रे प्रचेतसम्।
सुवर्णनिष्कषट्केन निर्मितं यादसाम्पतिम् ॥१०
यजेत् पुरुषसूक्तेन वरुणं विश्वरूपिणम्।
सामविद्ब्राह्मणस्तत्र सामवेदं समाचरेत् ॥११
सुवर्णपुत्रिकां कृत्वा निष्कविंशतिसङ्ख्यया।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन् ॥१२
यादसामधिपो देवोविश्वेषामपि पावनः।
संसाराब्धौ कर्णधारो वरुणः पावनोऽस्तु मे ॥१३
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि।
दद्यादेवमलङ्कृत्य मूत्रकृच्छ्रप्रशान्तये ॥१४
स्वसुतागमने चैव रक्तकुष्ठं प्रजायते।
भगिनीगमने चैव पीतकुष्ठं प्रजायते ॥१५

तस्य प्रतिक्रियां कर्त्तुं पूर्वतः कलसं न्यसेत् ।
पीतवस्त्रसमाच्छन्नं पोतमाल्यविभूषितम् ॥१६
तस्योपरि न्यसेत् स्वर्णपात्रे देवं सुरेश्वरम् ।
सुवर्णनिष्कपट्केन निर्मितं वज्रधारिणम् ॥१७
यजेत् पुरुषसूक्तेन वासवं विश्वरूपिणम् ।
यजुर्वेदं तत्र सामं ऋग्वेदञ्च समाचरेत् ॥१८
सुवर्णपुत्रिकां कृत्वा सुवर्णदशकेन तु ।
दद्याद्विप्राय सम्पूज्य निष्पापोऽहमिति ब्रुवन् ॥१६
देवानामधिपोर्देवो वज्री विष्णुनिकेतनः ।
शतयज्ञः सहस्राक्षः पापं मम निकृन्ततु ॥२०
इमं मन्त्रं समुच्चार्य्य आचार्य्याय यथाविधि ।
दद्याद्देवं सहस्राक्षं स्व पापस्यापनुत्तये ॥२१
मातृभार्य्याभिगमनाद्गलत्कुष्ठं प्रजायते ।
(स्त्ववधूगमने चैव कृष्णकुष्ठं प्रजायते) ॥२२
तेन कार्य्यं विशुद्ध्यर्थं प्रागुक्तस्यार्द्धमेव हि ।
दशांशहोमः सर्वत्र घृताक्तैः क्रियते तिलैः ॥२३
यदगम्याभिगमनाज्जायते ध्रुव(दद्रु)मण्डलम् ।
कृत्वा लोहमयीं धेनुं पलषष्टिप्रमाणतः ॥२४
कार्पासभाण्डसंयुक्तां कांस्यदोहां सवत्सिकाम् ।
दद्याद्विप्राय विधिवदिमं मन्त्रमुदीरयेत् ॥२५
सुरभिर्वैष्णवी माता मम पापं व्यपोहतु ।
तपस्विनी(मातुः सपत्नी)सङ्गमने जायते चाश्मरीगदः ॥२६

स तु पापविशुद्ध्यर्थं प्रायश्चित्तं समाचरेत् ॥२७
दद्याद्विप्राय विदुषे मधुधेनुं यथोदितम् ।
तिलद्रोणशतञ्चैव हिरण्येन समन्वितम् ॥२८
पितृष्वस्रभिगमनाद्दक्षिणां(ना)शव्रणी भवेत् ।
तेनापि निष्कृतिः कार्य्या अजादानेन शक्तितः ॥२९
मातुलान्यान्तु गमने पृष्ठकुब्जः प्रजायते ।
कृष्णाजिनप्रदानेन प्रायश्चित्तं समाचरेत् ॥३०
मातृष्वस्रभिगमने वामाङ्गे व्रणवान् भवेत् ।
तेनापि निष्कृतिः कार्य्या सम्यग्दासीप्रदानतः ॥३१
मृतभार्य्याभिगमने मृतभार्य्यः प्रजायते ।
तत्पातकविशुद्ध्यर्थं द्विजमेकं विवाहयेत् ॥३२
सगोत्रस्त्रीप्रसङ्गेन जायते च भगन्दरः ।
तेनापि निष्कृतिः कार्य्या महिषीदानयत्नतः ॥३३
तपस्विनीप्रसङ्गेन प्रमेही जायते नरः ।
मासं रुद्रजपः कार्य्यो दद्याच्छतया च काञ्चनम् ॥३४
दीक्षितस्त्रीप्रसङ्गेन जायते दुष्टरक्तदृक् ।
स पातकविशुद्ध्यर्थं प्राजापत्यद्वयञ्चरेत् ॥३५
स्वजातिजायागमने जायते हृदयव्रणी ।
तत्पापस्य विशुद्ध्यर्थं प्राजापत्यद्वयञ्चरेत् ॥३६
पशुयोनौ च गमने मूत्राघातः प्रजायते ।
तिलपत्रद्वयञ्चैव दद्यादात्मविशुद्धये ॥३७

अश्वयोनौ च गमनाद्गुदस्तम्भः प्रजायते।
सहस्रकमलस्नानं मासं कुर्य्यात् शिवस्य च ॥३८
एते दोषा नराणां स्युर्नरकान्ते न संशयः।
स्त्रीणामपि भवन्त्येते तत्तत्पुरुषसङ्गमात् ॥३६

इति शातातपीये कर्मविपाके अगम्यागमन प्रायश्चित्तं नाम पञ्चमोऽध्यायः।

.........

## ॥ अथ षष्ठोऽध्यायः ॥

### अनुचितव्यवहारफलम्।

अश्वशूकरशृङ्ग्याद्रिद्रुमादिशकटेन च।
भृग्वग्निदारुशस्त्राश्मविषोद्बन्धनजैर्मृताः ॥१
व्याघ्राहिगजभूपालचौरवैरिवृकाहताः।
काष्ठशल्यमृता ये च शौचसंस्कारवर्जिताः ॥२
साकिन्यादिग्रहैर्ग्रस्ता विद्युत्पातहताश्च ये ॥
अस्पृश्या ह्यपवित्राश्च पतिताः पुत्रवर्जिताः।
पञ्चत्रिंशत्प्रकारैश्च नाप्नुवन्ति गतिं मृताः ॥३
पित्राद्याः पिण्डभाजः स्युस्त्रयो लेपभुजस्तथा।
ततोनान्दीमुखाः प्रोक्ता त्रयोऽप्यश्रुमुखास्त्रयः ॥४
द्वादशैते पितृगणास्तर्पिताः सन्ततिप्रदाः।
गतिहीनाः सुतादीनां सन्ततिं नाशयन्ति ते ॥५

दश व्याघ्रादिनिहता गर्भं निघ्नन्त्यमी क्रमात् ।
द्वादशास्त्रादिनिहता आकर्षन्ति च बालकम् ॥६
विषादिनिहता घ्नन्ति दशसु द्वादशस्वपि ।
वर्षैकबालकं कुर्य्यार्दनपत्योऽनपत्यताम् ॥७
व्याघ्रेण हन्यते जन्तुः कुमारीगमनेन च ।
विषदश्चैव सर्पेण गजेन नृपदुःखकृत् ॥८
राज्ञा राजकुमारघ्नश्चौरेण पशुहिंसकः ।
वैरिणा मित्रभेदी च वकवृत्तिर्वृकेण तु ॥९
गुरुघाती च शय्यायां मत्सरी शौचवर्जितः ।
द्रोही संस्काररहितः शुना निक्षेपहारकः ॥१०
नरोविहन्यतेऽरण्ये शूकरेण च पाशिकः ।
कृमिभिः कृतघ्नासाश्च कृमिणा च निकृन्तनः ॥११
शृङ्गिणा शङ्करद्रोही शकटेन च सूचकः ।
भृगुणा भेदिनोचौरो वह्निना यज्ञहानिकृत् ॥१२
दन्तेन दक्षिणाचौरः शस्त्रेण श्रुतिनिन्दकः ॥
अश्मना द्विजनिन्दाकृद्विषेण कुमतिप्रदः ।
उद्बन्धनेन हिंस्रः स्यात् सेतुभेदो जलेन तु ॥१३
द्रुमेण राजदन्तिह्नदतीसारेण लौहहृत् ।
साकिन्याद्यैश्च म्रियते स्वदर्पकार्य्यकारकः ॥१४
अनध्यायेऽप्यधीयानो म्रियते विद्युता तथा ।
अस्पृश्यस्पर्शसङ्गी च वान्तमाश्रित्य शास्त्रहृत् ।
पतितोपत्यविक्रेतानपत्योद्विजवस्त्रहृत् ॥१५

अथ तेषां क्रमेणैव प्रायश्चित्तं विधीयते।
कारयेन्निष्कमात्रन्तु पुरुषं प्रेतरूपिणम्॥१६
चतुर्भुजं दण्डहस्तं महिषासनसंस्थितम्।
पिष्टैः कृष्णतिलैः कुर्य्यात् पिण्डं प्रस्थप्रमाणतः॥१७
मधुराज्यशर्करायुक्तं स्वर्णकुण्डलसंयुतम्।
अकालमूलं कलसं पञ्चपल्लवसंयुतम्॥१८
कृष्णवस्त्रसमाच्छन्नं सर्वौषधिसमन्वितम्।
तस्योपरिन्यसेद्देवं पात्रं धान्यफलैर्युतम्॥१६
सप्तधान्यन्तु सफलं तत्र तत् सफलं न्यसेत्।
कुम्भोपरि च विन्यस्य पूजयेत् प्रेतरूपिणम्॥२०
कुर्य्यात् पुरुषसूक्तेन प्रत्यहं दुग्धतर्पणम्।
षड़ङ्गञ्च जपेद्रुद्रं कलशे तत्र वेदवित्॥२१
यमसूक्तेन कुर्वीत यमपूजादिकं तथा।
गायत्र्याश्चैव कर्त्तव्यो जपः स्वात्मविशुद्धये॥२२
ग्रहशान्तिकपूर्वञ्च दशांशं जुहुयात्तिलैः।
अज्ञातनामगोत्राय प्रेताय सतिलोदकम्॥२३
प्रदद्यात् पितृतीर्थेन पिण्डं मन्त्रमुदीरयेत्।
इमं तिलमयं पिण्डं मधुसर्पिःसमन्वितम्॥२४
ददामि तस्मै प्रेताय यः पीड़ां कुरुते मम।
सजलान् कृष्णकलसांस्तिलपात्रसमन्वितान्।
द्वादश प्रेतमुद्दिश्य दद्यादेकञ्च विष्णवे॥२५

ततोऽभिषिञ्चेदाचार्यो दम्पती कलशोदकैः ।
शुचिर्वरायुध (रक्ताम्बर) धरो मन्त्रैर्वरुणदैवतैः ।
यजमानस्ततोदद्यादाचार्याय सदक्षिणाम् ॥२६

ततोनारायणबलिः कर्तव्यः शास्त्रनिश्चयात् ।
एष साधारणविधिरगतीनामुदाहृतः ॥२७

विशेषस्तु पुनर्ज्ञेयो व्याघ्रादिनिहतेष्वपि ।
व्याघ्रेण निहते प्रेते परकन्यां विवाहयेत् ॥२८

सर्पदंशे नागबलिर्देयः सर्वेषु काञ्चनम् ।
चतुर्निष्कमितं हेम गजं दद्याद्गजैर्हते ॥२९

राज्ञा विनिहते दद्यात् पुरुषन्तु हिरण्मयम् ।
चौरेण निहते धेनुं वैरिणा निहते वृषम् ॥३०

वृषेण निहते दद्याद्यथाशक्ति च काञ्चनम् ।
शय्यामृते प्रदातव्या शय्या तुलीसमन्विता ॥३१

निष्कमात्रसुवर्णस्य, विष्णुना समधिष्ठिता ।
शौचहीने मृते चैव द्विनिष्कस्वर्णजं हरिम् ॥३२

संस्कारहीने च मृते कुमारञ्च विवाहयेत् ।
शुना हते च निक्षेपं स्थापयेन्निजशक्तितः ॥३३

शूकरेण हते दद्यान्महिषं दक्षिणान्वितम् ।
कृमिभिश्च मृते दद्याद्गोधूमान्नं द्विजातये ॥३४
शृङ्गिणा च हते दद्याद्वृषभं वस्त्रसंयुतम् ।
शकटेन मृते दद्यादश्वं सोपस्करान्वितम् ॥३५

भृगुपाते मृतेचैव प्रदद्याद्धान्यपर्वतम्।
अग्निना निहते दद्यादुपानहं स्वशक्तितः ॥३६
दवेन निहते चैव कर्त्तव्या सदने सभा।
शस्त्रेण निहते दद्यान्महिषीं दक्षिणान्विताम् ॥३७
अश्मना निहते दद्यात् सवत्सां गां पयस्विनीम्।
विषेण च मृते दद्यान्मेदिनीं क्षेत्रसंयुताम ॥३८
उद्बन्धनमृते चाऽपि प्रदद्याद्गां पयस्विनीम्।
मृते जलेन वरुणं हैमं दद्यात्त्रिनिष्ककम् ॥३९
वृक्षं वृक्षहते दद्यात् सौवर्णं स्वर्णसंयुतम्।
अतीसारमृते लक्षं सावित्र्याः संयतोजयेत् ॥४०
साकिन्यादिमृते चैवं जपेद्रुद्रं यथोचितम्।
विद्युत्पातेन निहते विद्यादानं समाचरेत् ॥४१
अस्पर्शे च मृते कार्य्यं वेदपारायणं तथा।
सच्छास्त्रपुस्तकं दद्याद्धान्तमाश्रित्य संस्थित ॥४२
पातित्येन मृते कुर्य्यात् प्राजापत्यानि षोड़श।
मृते चापत्यरहिते कृच्छ्राणां नवतिश्चरेत् ॥४३
निष्कत्रयमितस्वर्णं दद्यादश्वं हयाहते।
कपिना निहते दद्यात् कपिं कनकनिर्मितम् ॥४४
विसूचिकामृते स्वादु भोजयेच्च शतं द्विजान्।
तिलधेनुः प्रदातव्या कण्ठेऽन्नकवले मृते ॥४५

केशरोगमृते चापि अष्टौ कृच्छ्रान् समाचरेत् ।
एवं कृते विधानेन विदध्यादौर्द्ध्वदैहिकम् ।
ततः प्रेतत्वनिर्मुक्ताः पितरस्तर्पितास्तथा ॥४६
दद्युः पुत्रांश्च पौत्रांश्च आयुरारोग्यसम्पदः ।
इतिशातातपप्रोक्तोविपाकः कर्मणामयम् ।
शिष्याय शरभङ्गाय विनयात् परिपृच्छते ॥४७

इति शातातपीये कर्मविपाके अगतिप्रायश्चित्तं नाम षष्ठोऽध्यायः ॥

समाप्ता चेयं शातातपस्मृतिः ।

—:o:—

समाप्तश्चायं धर्मशास्त्रस्य प्रथमो भागः ।

ॐ तत्सद्ब्रह्मार्पणमस्तु ।

# अथ शुद्धा-शुद्धि-पत्रम् ।

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठ· |
|---|---|---|---|
| १ | सृष्ट्युयपत्ति | ५ | सृष्ट्युत्पत्ति |
| १३ | मनुधीमा | १० | मनुर्धीमा |
| २ | भुक्ते | १७ | भुंक्ते |
| ८ | पुजितं | १७ | पूजितं |
| १६ | अङ्गष्ठ | १७ | अङ्गुष्ठ |
| २ | वुपवित्यु | १८ | वुपवीत्यु |
| १६ | आयुमान् | २३ | आयुष्मान् |
| ११ | तिष्ठेम्माता | २४ | तिष्ठेन्माता |
| २२ | तेषांन्तु | २४ | तेषान्तु |
| १२ | ण्यथर्षिवत् | २६ | ण्यथर्षिवत् |
| ३ | तेष्येव | ३३ | तेष्वेव |
| १४ | पूत्र | ३४ | पूर्वं |
| ११ | कर्मणि | ३५ | कर्मण्य |
| १८ | नम्नीं | ३५ | नाम्नीं |
| ६ | शूद्रेव | ३६ | शूद्रैव |
| २२ | ब्राह्मणो | ३६ | ब्राह्मो |
| १४ | ब्रह्मादिषु | ३८ | ब्राह्मादिषु |

| पंक्तिः | अशुद्ध पाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ११ | संविशंदा | ३६ | संविशेदा |
| ४ | नार्य्यास्तु | ४० | नार्य्यस्तु |
| १८ | मोहाच्छाद्धे | ४७ | मोहाच्छ्राद्धे |
| ६ | छेद्र | ५१ | छूद्र |
| ८ | विप्रोस्य | ५१ | विप्रोऽस्य |
| ११ | दत्तमुप्र | ५१ | दत्तमप्र |
| ४ | अग्नि | ५३ | अनग्नि |
| ८ | अग्न्यभाव | ५४ | अग्न्यभावे |
| १६ | षड्कृतंश्च | ५४ | षड्कृतूंश्च |
| ६ | तच्छाद्धं | ५५ | तच्छ्राद्धं |
| १५ | हविर्गुण | ५६ | हविर्गुणाः |
| १७ | यद्भुक्ते | ५६ | यद्भुङ्क्ते |
| ५ | ढैवे | ५८ | दैवे |
| १२ | ब्राह्मणंस्तंस्तु | ५८ | ब्राह्मणांस्तांस्तु |
| १६ | स्तं | ५८ | स्तां |
| १६ | त्यये | ५८ | त्यन्ये |
| ८ | चैबा | ६० | चैवा |
| ५ | चनुर्थं | ६२ | चतुर्थ |
| ११ | दुख | ६२ | दु ख |
| १३ | स्ब | ६२ | स्व |
| २१ | प्राणने | ३ | प्राणाने |

| पंक्तिः | अशुद्ध पाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ३ | वङ्मात्रे | ६४ | वाङ्मात्रे |
| ८ | राजातौ | ६४ | राजतो |
| १२ | स्वया | ६६ | स्वप्या |
| १८ | दात्मतः | ६८ | दात्मनः |
| २२ | निस्वने | ७० | नि स्वने |
| १६ | दत्बा | ८२ | दत्त्वा |
| १० | धर्मप्रदानं युरुषं | ८३ | धर्मप्रधानं पुरुषं |
| ४ | गुरुन् | ८४ | गुरून् |
| ५ | दान्यूहं | ८६ | दात्यूहं |
| ११ | मांसस्त्यातः | ८७ | मांसस्थातः |
| २३ | पितं | ८७ | पितृं |
| १७ | भवत् | ९२ | भवेत् |
| २२ | भर्त्तु | ९९ | भर्त्तुः |
| ७ | षुष्पाणि | १०२ | पुष्पाणि |
| १८ | प्रपढै | १०२ | प्रपदै |
| ७ | चान्येष | १०३ | चान्येषु |
| २ | व्द्वेदन् | १०४ | द्वेदान् |
| ६ | निरुप्येष्टि | १०४ | निरूप्येष्टिं |
| २१ | कालमेब | १०४ | कालमेव |
| २१ | ग्रहाद् | १०७ | ग्राहाद् |
| १४ | शिष्ठो | १०८ | शिष्टो |

| पंक्तिः | अशुद्ध पाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ६ | च्छुत्वा | १०६ | च्छ्रुत्वा |
| १५ | निवोधतः | १०६ | निबोधत |
| १४ | चक्षुंपि | ११० | चक्षूंपि |
| २० | विनिया | ११३ | विनया |
| ६ | सव | ११६ | सव |
| १८ | प्रकारस्थो | ११६ | प्राकारस्थो |
| ५ | तेस्य | ११७ | तेऽस्य |
| ५ | केर्युं | ११७ | कुर्यु |
| १२ | मायथा | ११६ | मायया |
| २१ | प्रसह्यैत | ११६ | प्रसह्यतां |
| १ | धमवणन | १२१ | धमवर्णन |
| २ | चमणाम् | १२२ | चर्मणाम् |
| १२ | वर्षस्य | १२२ | वषस्य |
| २ | कम | १२४ | कम |
| १ | धमवणन | १२७ | धमवर्णन |
| ५ | स्वयम् | १२७ | स्वयम् |
| ८ | सम्पूज | १२८ | सम्पूजये |
| १५ | कालेयुक्तं | १२८ | कालयुक्तं |
| १७ | वर्णन | १३० | वणनं |
| १७ | द्रुमं | १३२ | द्रुम |
| १८ | द्रुम | १३२ | द्रुमं |

| पंक्तिः | अशुद्ध पाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ४ | पुरुषः | १३५ | पूरुषः |
| १३ | धमर्णां | १३५ | धमर्णा |
| २३ | कारणं | १३५ | कारणं |
| १४ | यावन्नितु | १३६ | यावन्निह |
| ४ | गवानृपे | १४० | गवानृते |
| १८ | सरस्वतीम् | १४० | सरस्वतीम् |
| ६ | स्तेनऽन्यथा | १४४ | स्तेनोऽन्यथा |
| २२ | धनश्वेत्तु | १४५ | धनश्चेत्तु |
| १० | व्यहारं | १४६ | व्यवहारं |
| ६ | च्छेयांस्तु | १४७ | च्छ्रेयांस्तु |
| १ | ४७ | १४७ | १४७ |
| १७ | प्राड | १४७ | प्राड् |
| १९ | धर्माय | १५० | धर्मार्थ |
| ३ | सम्प्रक्ष्यामि | १५२ | सम्प्रवक्ष्यामि |
| २० | पृशवो | १५२ | पशवो |
| १२ | र्दयोः | १५३ | द्वयोः |
| १६ | प्रभवो | १५५ | प्रभवो |
| ४ | विधभ् | १५६ | विधम् |
| ६ | दुखाय | १५७ | दुःखाय |
| १६ | भग्नयुगो | १५७ | भग्नयुगे |
| २० | गोमयरय | १६० | गोमयस्य |

| पंक्तिः | अशुद्ध पाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| २१ | क्षीरस्य | १६० | क्षीरस्य |
| २१ | क्षत्रियस्यं | १६१ | क्षत्रियस्य |
| ४ | क्लिसेत | १६२ | क्लिप्सेत |
| ७ | दतु | १६२ | दातु |
| ८ | सर्वस्व | १६५ | सर्वस्य |
| ५ | मौण्ड्यनृच्छेत्तु | १६६ | मौण्ड्यमृच्छेत्तु |
| १५ | नेत्रा | १६६ | नेतात्रा |
| ६ | प्रवजितो | १६८ | प्रव्रजितो |
| ६ | वस्तरथ | १७३ | वस्तथा |
| ३ | ददानीति | १७४ | ददामीति |
| ४ | महीष्य | १७४ | महिष्य |
| ८ | विथि | १७६ | विधि |
| २२ | उन्म तं | १७६ | उन्मत्तं |
| ६ | जजयति | १८२ | जयति |
| ५ | कामज | १८३ | कामजम |
| ७ | गूडो | १८४ | गूढो |
| २१ | येद्यत्मै | १८५ | येद्यस्मै |
| ५ | र्यद्यय | १८७ | यद्यस्य |
| १० | अघ्य | १८७ | अध्य |
| ४ | तुयं | १८८ | तु |
| ७ | मुतपन्न | १८८ | मुत्पन्न |

| पंक्तिः | अशुद्ध पाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ४ | द्युतं | १६० | द्यूतं |
| ११ | तस्माद्यूतं | १६० | तस्ताद्द्यूतं |
| २१ | हन्याद्दिट् | १६० | हन्याद्द्विट् |
| १८ | द्रयाणां | १६५ | द्रव्याणां |
| २० | गूल्य | १६५ | मूल्य |
| ६ | मन | १६६ | मान |
| ६ | प्रोप्य | १६८ | प्रकोप्य |
| २३ | साम्पति | १६८ | शाम्यति |
| ७ | भृत्याग्नि | १६६ | भृत्याग्नि |
| १६ | तांतबस्य | १६६ | तांतवस्य |
| ११ | विंद्यादिमं | २०१ | विद्यादिमं |
| १७ | वर्णौ | २०१ | वर्णौ |
| ७ | लोभ्येन | २०२ | लोम्येन |
| ११ | म्मृतः | २०२ | स्मृतः |
| १४ | जतय | २०२ | जनय |
| २३ | स्धकर्मणां | २०२ | स्वकर्मणां |
| २३ | योवी | २०३ | योगवी |
| ८ | तिर्यआ | २०७ | तिर्यग्जा |
| २० | निवर्तं | २०७ | निवर्तें |
| ६ | योऽन्नमति | २१० | योऽन्नमत्ति |
| १८ | क्रयेते | २१० | क्रियेते |

| पंक्तिः | अशुद्ध पाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ७ | निश्स्वेभ्यो | २१३ | निःस्वेभ्यो |
| ४ | कुर्या | २१६ | कुर्या |
| २३ | शद्राणां | २१६ | शूद्राणां |
| ८ | शुद्ध्यपि | २१७ | शुद्ध्यति |
| १६ | तानु | २१८ | ताऽनु |
| ८ | नवसेद् | २२० | निवसेद् |
| ५ | चजा | २२१ | चेजा |
| १६ | नवेदयेत् | २२३ | निवेदयेत् |
| २१ | कृ छ्रू | २२५ | कृच्छ्र |
| १८ | सुरापस्प | २२६ | सुरापस्य |
| २३ | कृच्छा | २२७ | कृच्छ्रा |
| २१ | ज्ञातित्व | २२८ | ज्ञातित्वे |
| १ | गम्यागम्य | २२६ | अगम्यागमन |
| १६ | ज्ञात्र्य | २२६ | ज्ञात्र्यृ |
| ७ | संवत्स । | २३१ | संवत्सरं यवा |
| ५ | कृच्छाति | २३२ | कृच्छ्राति |
| ६ | निप्क | २३२ | निष्क |
| १६ | यतात्मानः | २३४ | संयतात्मनः |
| १४ | कृत्स्त्रो | २३७ | कृत्स्नों |
| १५ | मानस | २३८ | मानसै |
| १ | ३३८ | २३८ | २३८ |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| १० | मव्क्तं | २४० | मव्यक्तं |
| १५ | धर्मकिया | २४० | धर्मक्रिया |
| २० | सकृद्गम | २४४ | सकृद्गर्भं |
| १५ | सः | २४७ | स |
| २२ | ममु | २४८ | मनु |
| २३ | वैंस्वतं | २५२ | वैवस्वतं |
| २ | पुरःस्कृत्य | २५३ | पुरस्कृत्य |
| १८ | रातिपु | २५३ | रात्रिपु |
| ६ | मुच्यन्ये | २५७ | मुच्यन्ते |
| ११ | वच | २५७ | वच |
| ४ | स्मृतम | २५८ | स्मृतम् |
| १० | पैतामह | २५८ | पैतामहं |
| ३ | दद्याद्यरते | २६० | दद्याद्यस्ते |
| १२ | कुतं | २६० | कृतं |
| १४ | धनम | २६२ | धनम् |
| १३ | षधयरथा | २६३ | षधयस्तथा |
| १६ | रितला | २६३ | स्तिला |
| १७ | हातेण | २६४ | हारेण |
| १६ | नोपभौगेन | २६४ | नौपभोगेन |
| २१ | आध्य | २६४ | आध्या |
| ५ | यति | २६५ | याति |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ७ | भुक्तिरेव | २६५ | भुक्तिरेव |
| १ | २६ | २६६ | २६६ |
| ३ | शास्त्रेपु | २६६ | शास्त्रेषु |
| ७ | र्वद्धि | २६६ | वृद्धि |
| १७ | तरतथा | २६७ | तस्तथा |
| १९ | पयये | २६७ | पर्यये |
| ८ | लेख्यत | २६८ | लेख्यतः |
| ९ | तिरतयोः | २६८ | तिस्तयोः |
| ३ | हरत | २६९ | हस्त |
| ३ | प्राति | २६९ | प्राप्ति |
| ९ | रमृतः | २६९ | स्मृतः |
| १५ | विधरतत्र | २६९ | विधस्तत्र |
| १४ | वद्धा | २७० | वृद्धा |
| ४ | आधर्य | २७१ | आधर्यं |
| १३ | यंच्छो | २७१ | यदृच्छो |
| १५ | सिद्धि | २७१ | सिद्धिं |
| १० | वद्ध | २७२ | वृद्ध |
| ८ | विधं | २७४ | विप्रं |
| २० | वषशते | २७४ | वर्षशते |
| २२ | साक्ष्ते | २७४ | साक्ष्ये |
| १९ | सव | २७६ | सर्व |
| ६ | प्रब्रयु | २७७ | प्रब्रूयु |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| १६ | दावा | २७८ | दात्रा |
| ६ | रमृतम् | २८१ | स्मृतम् |
| १३ | मुह | २८१ | मुपह |
| १३ | विश्वा | २८३ | विश्वा |
| २ | दत्वा | २८५ | दत्वा |
| ५ | विमुच्यते | २८५ | विमुच्यते |
| १५ | स्वामिने | २८७ | स्वामिने |
| ३ | स्वामिनः | २८८ | स्वामिनः |
| ५ | मृतषे | २८८ | मृतेषु |
| ६ | दप | २८० | दप |
| १३ | तद्दिगुणं | २६० | तद्द्विगुणं |
| १० | वाह्य | २६१ | बाह्य |
| १२ | रयात् | २६१ | स्यात् |
| १२ | तद्दिगुणं | २६१ | तद्द्विगुणं |
| १३ | सर्ववीजा | २६१ | सर्वबीज |
| २ | योगाद | २६६ | योगाद् |
| २० | क्लीव | ३०० | क्लीब |
| १६ | स्वयं | ३०३ | स्वयं |
| १७ | किल्वीषी | ३०५ | किल्बिषी |
| ५ | मेव | ३१० | मेव |
| ११ | भंतव्याः | ३१० | भर्तव्याः |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| १३ | दधां | ३१० | दर्धा |
| १३ | तद्धनान् | ३११ | तद्धनात् |
| १६ | कुटुन्वार्थे | ३११ | कुटुम्बार्थे |
| १८ | व्रिनिर्णये | ३११ | विनिर्णये |
| १४ | गड् | ३१२ | पड् |
| ६ | करस्य | ३१३ | करणस्य |
| १४ | शास्त्रज्ञौ | ३१३ | शास्त्रज्ञौ |
| १८ | प्रसर्पताम | ३१४ | प्रसर्पताम् |
| २३ | एव | ३१४ | एव |
| २२ | प्रप्सु | ३१[illegible] | प्रेप्सु |
| १६ | तद्वत्ति | ३१६ | तद्वृत्ति |
| ७ | प्रवर्तं | ३२० | प्रवर्त |
| २० | व्राह्मो | ३२० | व्राह्मणो |
| २२ | पूरुषः | ३२३ | पूरुषः |
| १४ | स्युरत | ३२५ | स्युस्त |
| १३ | धर्मस्तु | ३२८ | धर्मस्तु |
| १३ | द्वत्रिंशत | ३२६ | द्वात्रिंशत् |
| ११ | यस्तु | ३३२ | यस्तु |
| १६ | अत | ३३२ | अतः |
| ३ | विषयस्य | ३३४ | विषस्य |
| ११ | विधीयते | ३३४ | विधीयते |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| १५ | ब्भ्यस्य | ३३६ | ब्यभ्यस्य |
| १५ | नैत्यकम् | ३३६ | नैत्यिकम् |
| २ | ज्ह्विानां | ३३६ | ज्ह्विा |
| ११ | २ | ३४२ | ० |
| १२ | ० | ३४२ | २ |
| २० | प्रायास्चिते | ३४२ | प्रायश्चित्ते |
| १६ | तथव | ३४४ | तथैव |
| ४ | तस्यंते | ३४५ | तस्य ते |
| ६ | दरतु | ३४६ | दस्तु |
| ६ | मृषिभि | ३५२ | मृषिभि |
| १० | शौच | ३५५ | शौचं |
| १० | नाया | ३५५ | माया |
| २ | नन्त | ३५६ | नान्त |
| १३ | मवाप्नु | ३५६ | माप्नु |
| १४ | धगम् | ३५७ | धरम् |
| २० | सुवर्चसम | ३५७ | सुवर्चसम् |
| १३ | मवेत् | ३५८ | भवेत् |
| १६ | तदुच्चिष्टन्तु | ३५६ | तदुच्छिष्टन्तु |
| १४ | सचेलः | ३६० | सचैलः |
| १६ | स्कृता | ३६० | संस्कृता |
| १८ | यद्यानं | ३६० | यद्यान्नं |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ४ | कृचूड | ३६१ | कृतचूड |
| १० | दूद्धं | ३६१ | दृद्धं |
| १५ | स्या | ३६१ | स्यात् |
| १८ | पूर्षं | ३६२ | पूर्वं |
| २ | यदि | ३६७ | यति |
| १८ | क्राम | ३६७ | काम |
| ११ | मत्र्यं | ३६८ | मत्र्यं |
| २० | षश्च | ३६८ | पश्च |
| २३ | गन्धव | ३६६ | गन्धर्व |
| १७ | स्वयं | ३७० | स्वयं |
| १६ | प्रारब्द्ध | ३७० | प्रारब्ध |
| २२ | कुच्छ्र | ३७० | कृच्छ्र |
| ११ | पादांच | ३७१ | पादांश्च |
| १२ | तथै | ३७१ | तयै |
| १४ | द्विजत्तमः | ३७१ | द्विजोत्तमः |
| २३ | नाप | ३७१ | नोप |
| ६ | घायये | ३७२ | घातये |
| ६ | गोदोहन | ३७३ | गोदोहने |
| १७ | वंश्वदेवं | ३७५ | वैश्वदेवं |
| ११ | नत्तश्च | ३७८ | नक्तश्च |
| १८ | मधिका | ३७६ | मधिकां |
| ६ | रात्री | ३८१ | रात्रौ |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| ६ | रेणं | ३८१ | रेणु, |
| १ | संहित | ३८२ | संहिता |
| १२ | दुर्भिक्षे | ३८२ | दुर्भिक्षे |
| १४ | पथिवी | ३८२ | पृथिवी |
| ३ | वष | ३८३ | वप |
| २० | दी ते | ३८४ | दीप्तते |
| ७ | यवा | ३८५ | याव |
| ११ | वर्ज्जं | ३८८ | वर्ज्जं |
| २ | ० | ३८६ | प्रथम |
| १० | कुव | ३६७ | कुवं |
| ६ | अन्वथा | ३६६ | अन्यथा |
| ६ | सिसृक्ष | ४०१ | सिसृक्षु |
| २३ | पयङ्क | ४०४ | पर्यङ्क |
| १० | वश्यः | ४०७ | वैश्यः |
| १२ | ताम्र | ४११ | ताम्र |
| १० | कार्षापण | ४१३ | कार्षापण |
| ८ | त्व | ४१४ | त्वे |
| १३ | व्रव | ४१४ | ब्रुव |
| १६ | क्रीत | ४१७ | क्रीत |
| १७ | राजबि | ४१७ | राजवि |
| १३ | सत्रर्व | ४१६ | सर्व |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| १६ | दन्डं | ४२१ | दण्डं |
| ८ | चतु | ४२६ | चतुः |
| ८ | द्शे | ४२७ | देशे |
| १४ | हस्ता | ४२७ | हस्ता |
| २२ | पुरुप | ४२७ | पुरुष |
| ६ | पश्चार्य | ४३३ | पश्चार्थ |
| ६ | शूत्रा | ४३६ | शूद्रा |
| ११ | त्वक्ता | ४४१ | त्यक्त्वा |
| ७ | त्रायान्ते | ४४२ | त्रायन्ते |
| ८ | स्ताब | ४४३ | स्ताव |
| ११ | ज्जीवं | ४४४ | ज्जीवं |
| १७ | वैस्यस्य | ४४४ | वैश्यस्य |
| ४ | प्रयाश्चित्तं | ४४५ | प्रायश्चित्तं |
| ७ | शुद्धति | ४४५ | शुद्ध्यति |
| ३ | कृतचडे | ४४६ | कृतचूडे |
| १६ | च्ब | ४४६ | च्व |
| १३ | रुघि | ४४७ | रुधि |
| २० | स्पष्ट्रा | ४४७ | स्पृष्ट्वा |
| २३ | कर्तणि | ४४८ | कर्तृणि |
| ३ | शुचिन | ४४९ | शुचिनं |
| १५ | प्रभूताता | ४५० | प्रभूतानां |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
| --- | --- | --- | --- |
| १३ | मत्चान्तः | ४५२ | माचान्तः |
| १३ | नाम | ४५३ | नाम् |
| १४ | हीनाङ्गींम् | ४५३ | हीनाङ्गीम् |
| ५ | पुरुषावेक | ४५४ | पुरुषानेक |
| १६ | सीमान्तो | ४५६ | सीमन्तो |
| १० | भव | ४५७ | भव |
| १८ | नास्यामि | ४५८ | नास्याभि |
| १६ | कुर्याति | ४५८ | कुर्यात्ति |
| २० | मुपेत्यः | ४५८ | मुपेत्य |
| ६ | गुरोगुरौ | ४५६ | गुरोर्गुरौ |
| ५ | साप्ता | ४६० | सप्ता |
| ६ | वर्तयन्ने | ४६० | वर्तयन्नेक |
| १३ | न्नुपसे | ४६० | न्नुपवसे |
| ६ | व | ४६१ | वै |
| ७ | ब्रुया | ४६१ | ब्रूया |
| ८ | ब्रुथा | ४६१ | ब्रूया |
| ११ | उनत्रिंशो | ४६१ | त्रिंशो |
| ११ | पञ्चमान | ४६१ | पञ्चमान् |
| ११ | फलदम | ४६२ | फलदम् |
| ७ | बिप्रयस्य | ४६३ | विप्रस्य |
| १६ | गुरो | ४६३ | गुरवो |
| ६ | ध्यांयः | ४६४ | ध्यायः |

| पंक्तिः | अशुद्धपाठः | पत्राङ्कम् | शुद्धपाठः |
|---|---|---|---|
| १४ | पिवृष्वसा | ४६४ | पितृष्वसा |
| १६ | द्रुम | ४६८ | द्रुम |
| ३ | णनु | ४७२ | णानु |
| २० | त्राय | ४७५ | प्राय |
| १० | चैष्णवे | ४७६ | वैष्णवे |
| १० | अष्टा | ४७६ | अष्ट |
| ६ | पश्चां | ४८० | पश्चा |
| २२ | सुद्ध्यति | ४८१ | शुद्ध्यति |
| ७ | द्रां | ४८२ | द्रां |
| २० | कान्नं | ४८२ | कान्नं |
| १० | पर्य्युषितं | ४८४ | पर्य्युषितं |
| १० | असंरक्तान् | ४८५ | असंस्कृतान् |
| ६ | बधात्र्या | ४८७ | बधात्त्या |
| १० | धर्म्मं | ४८८ | धर्म्म |
| १६ | श्चाम्द्रा | ४८८ | श्चान्द्रा |
| १८ | तद्व्रतं | ४८८ | तद्व्रतं |
| ३ | र्व्यपपो | ४८६ | र्व्यपो |
| ५ | टत्ति | ४६० | वृत्ति |
| १६ | प्रहात् | ४६० | ग्रहात् |
| ११ | सर्वपाप | ४६२ | सर्वपापा |
| १७ | भूर्भुव | ४६२ | भूर्भुवः |

